सद्गत मोदी श्रीयुत प्रेमचंद दोलतराम स्मारक-ग्रन्थांक २







अमदावाद निवासी सद्गत श्रावक श्रीयुत प्रेमचंद दोलतराम मोदीना पुण्यस्मरणार्थे, तेमना स्नेही रा. वा. श्रीगिरधरलाल उत्तमराम पारेख, बी. ए., एल्‌एल्‌. बी. (पब्लिक प्रोसीक्युटर–अमदावाद) एमणे अर्पण करेला द्रव्यमांथी आ ग्रन्थ प्रकाशित करवामां आव्यो छे.

जैन साहित्य
संशोधक ग्रन्थमाला

# विजयदेव-माहात्म्यम्

सम्पादक
भिक्षु जिन विजय

# समर्पण



जैन समाजना
उत्कर्षेच्छु अने एकनिष्ठ आराधक एवा
जे आचार्यना तेजस्वी अने तपस्वी जीवननुं
प्रस्तुत ग्रन्थमां माहात्म्य वर्णवामां आव्युं छे तेवा ज
माहात्म्यने अनुरूप एवा वर्तमान समयमां विचरता तथा जैन-
समाजना उत्कर्षनी एकनिष्ठ आराधना करता
**आचार्य श्रीमद् विजयवल्लभसूरि**
ना तपस्वी अने तेजस्वी जीवनने
सादर समर्पित

— जिन विजय

जैन साहित्य संशोधक ग्रन्थमाला

ग्रन्थाङ्क-९

श्रीश्रीवल्लभपाठक-विरचितं

# विजयदेव-माहात्म्यम्



( प्रथम भाग-मूलमात्र )



संशोधक तथा संपादक

भिक्षु जिन विजय

[ आचार्य-गूजरात पुरातत्त्व मन्दिर-अमदावाद ]



प्रकाशक

जैन साहित्य संशोधक समिति मारफत

मर्हुम रा. बा. गीरधरलाल उत्तमराम पारीख

बी. ए. एलएल. बी. ना ट्रस्टीओ

अमदावाद



Edited by Muni Jin Vijayaji Jaina Sahitya Samsodhaka Karyalaya Ahmedabad and Published by K. P. Modi the trustee of late R. B. Girdharlal Uttamram Parikh Haja Patel's Pole Ahmedabad and Printed at the Diamond Jubilee Printing Press, Salapose Road Ahmedabad by Devidas Chhaganlal Parikh. 1928.

1st Edition. 500 Copies.

वि. सं. १९८४ ] [ खि. सं. १९२८

# प्रास्ताविक

आ विजयदेव माहात्म्य १७ मा सैकाना जैन धर्मना इतिहासनी दृष्टिए एक घणो उपयोगी ग्रन्थ छे. जैन आचार्योमां विजयदेवसूरि ए छेल्ला प्रभावशाली आचार्य गणी शकाय. एमना समयमां जैन यति-समुदायमां अने श्रावक-वर्गमां घणी घटनाओ अने क्रान्तिओ थई. धार्मिक अने सामाजिक परिस्थितिना अवलोकननी दृष्टिए ए घटनाओनो इतिहास घणो रोचक अने सूचक छे; तेथी ए आखो इतिहास आ ग्रन्थना बीजा भागरूपे प्रकट करवानो विचार राख्यो छे. तेमां आ आखा ग्रन्थनो सार आपवामां आवशे अने ते साथे विस्तृत ऊहापोह करवामां आवशे. ग्रन्थकार श्रीवल्लभ पाठकनो परिचय पण तेमां ज अपाशे. तेथी आ भाग केवल मूल ग्रन्थ तरीके ज प्रकट कराय छे.

—जिन विजय



નોંધ:—આ ગ્રંથનું છપામણુ ખર્ચ, અમદાબાદ નિવાસી મર્હુમ રા. બા. ગિરધરલાલ ઉત્તમલાલ પારેખે શેઠ પ્રેમચંદ દોલતરામના સ્મરણાર્થે મુકેલ રકમમાંથી, તેના ટ્રસ્ટીઓ તરફથી આપવામાં આવ્યું છે. મર્હુમની ઇચ્છાનુસાર આ પુસ્તક, એના યોગ્ય અભ્યાસીઓને વિના મૂલ્યે આપવાનું ઠરાવ્યું છે. તેથી ગ્રંથ મેળવવા ઇચ્છનાર, વકીલ કેશવલાલ પ્રેમચંદ મોદી, હાજાપટેલની પોળ, અમદાબાદ; એમના ઉપર પોષ્ટે જ પુરતું ખર્ચ મોકલી મેળવી શકશે.

—વ્યવસ્થાપક.

श्रीवल्लभोपाध्यायविरचितं

# विजयदेवसूरि-माहात्म्यम् ।

ॐ ॥ श्रीतपागच्छाधिराज भ० १९ श्रीविजयदेवसूरिगुरुभ्यो नमः ॥

**स्वस्तीव स्वस्तिसंपृक्तं स्वस्तीव स्वस्तिकारकम् । वर्द्धमानं जिनं नौमि जगतः परमप्रियम् ॥१॥**

१–ऍं नमः। व्याख्या–अहं वर्धमानं जिनं नौमीति क्रियान्वयः सुगमः।कथम्०? वर्धमानं स्वस्तिसंपृक्तं–स्वस्ति–कल्याणेन, संपृक्तो–मिलितो, य स तथा तम्। किमिव? स्वस्तीव–स्वस्तिशब्द इव। कथंभूतं स्वस्ति? स्वस्तिसंपृक्तं–स्वस्ति कल्याणमित्यर्थेन मिलितं–व्याप्तं, यत्तत्तम् । तथा तत्स्वस्तीत्यस्यार्थस्य कल्याणापरपर्यायस्य स्वस्तिशब्द एव विद्यमानत्वात् । न तु घटादौ शब्दवृन्दे, घटादिशब्दानां अपरपदार्थवाचकत्वात् । न च कल्याणादिशब्दवृन्देऽपि, कल्याणादिशब्दवृन्दस्य स्वस्तिशब्दस्य पर्यायान्तरवाचकत्वात्; सुवर्णादीनामपि पर्यायत्वाच्च । केनापि 'कल्याणमस्तु' इत्याशीर्वचने निवेदिते स्वर्णमस्तु इत्यप्यर्थप्रतीतेः। पुनः कथंभूतं वर्धमानं? स्वस्तिकारकं–कल्याणकारकम् । किमिव? स्वस्तीव–स्वस्तिशब्दवत् । यथा स्वस्तिशब्दः केनाप्युच्चरितः श्रुतः सन् स्वस्तिमतोऽस्वस्तिमतो वा यस्य कस्यचित् स्वस्तिकारीस्यात्, तथा वर्धमानजिनोऽपीति । स्वस्तीव इत्युभयोरुपमापदयोः स्वस्ति इत्यत्र अकृतशब्दनिर्देशत्वात् अव्ययत्वात्; द्वितीयविभक्त्येकवचनलोपः विभिन्नलिङ्गवचनानामिति वाग्भटवचनात् । भिन्नलिंगोपमां बुधाः क्वापि प्रयुञ्जते तथापि लिंगभेदं तु मेनिरे; इति वाग्भटेन तत्रैव कथितत्वात् । मुखं चन्द्रमिवालोक्य इत्याद्युदाहरणवत् । नपुंसकलिङ्गोपमादोषोऽपि नेति । ननु पुंल्लिङ्गस्त्रीलिङ्गशब्दान् विहाय आदित एव अव्ययशब्दप्रयोगे किं प्रयोजनम्। अव्ययशब्दानां नपुंसकलिङ्गत्वात्। नपुंसकस्य च कार्यकरणे अवीर्यत्वात् इति चेन्मैवम्–'प्रशब्दश्चाथ शब्दश्च, द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ, तस्मान्मङ्गलवाचकौ ॥ १ ॥' इति प्राचां वचनात्; प्राथादिशब्दवत् स्वस्तिशब्दस्य नपुंसकलिङ्गत्वेऽपि मङ्गलवाचककारकत्वाभ्यामवश्यं सवीर्यत्वात् स्वस्तीत्यस्य अव्ययस्य नपुंसकस्य प्रथमतः प्रयोगो न दोषायेति । अथवा 'सदृशं त्रिषु लिङ्गेषु' इत्युक्तत्वात्, अव्ययानां त्रिष्वपि लिङ्गेषु समानरूपत्वात्, इह स्वस्तीत्यनयोः उभयोरुपमापदयोः पुंल्लिंगद्वितीयैकवचनेमवावसेयमिति । तथा स्वस्तीत्यत्रोभयत्र अव्ययोपमापदयोः प्रयोगे–'सदृशं त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु, यन्न व्येति तदव्ययम्॥१॥'इत्युक्तत्वात्। यथा अव्ययशब्दो लिङ्गादिषु कदापि न व्येति तथा एतच् श्रीविजयदेवमाहात्म्यनामकं काव्यमपि। स्वास्तिमत्त्वे कर्तृश्रोत्रध्येतृप्रभृतीनां स्वास्तिकर्तृत्वे च न व्येतीति कवेरभिप्रायः । पुनः कथंभूतं वर्धमानं जिनं? जगतो लोकस्य परमप्रियं प्रकटार्थमेतदुभयोर्विशेषणं इति श्लोकार्थः ॥ १ ॥

माहात्म्यं पूर्वसूरीणामतिशेतेऽत्र भूतले । विजयदेवसूरीणां माहात्म्यमधिकं सदा ॥२॥
विजयदेवमाहात्म्यं वर्ण्यतेऽत्र यतोऽद्भुतम् । विजयदेवमाहात्म्यं नाम काव्यं ततः स्मृतम् ॥३॥
विजयदेवमाहात्म्यनाम काव्यं कविप्रियम् । श्रीवल्लभ उपाध्यायः कुरुते स्वार्थसिद्धये ॥४॥
विजयदेवसूरीणां प्रगुणाः सद्गुणा गुणाः । विदिता अवदाताश्च प्रेरयन्ति यतोऽत्र माम् ॥५॥युग्मम्
भास्वच्छ्रीभारते क्षेत्रे, धरालङ्करणं सदा । पुराणां भाति राजेव श्रीईडरपुरं पुरम् ॥६॥
तत्र श्रेष्ठी स्थिरो नाम श्रेष्ठश्रेष्ठिशिरोमणिः । ऋद्धिमान् भूपतेः प्रेष्ठः श्रेष्ठः सर्वप्रतिष्ठया ॥७॥
रूपानाम्नी सुरूपा स्त्री तस्यासीच्छुभलक्षणा । विनयादिगुणोपेता रूपवत्स्वप्रियप्रिया ॥८॥
एतौ जायापती भोगान् शचीशक्राविवानिशम् । अभुञ्जातामयुञ्जातां रतिप्रीतीव चेतसि ॥९॥
सुखसुप्तैकदा रूपा स्वप्ने सिंहं व्यलोकयत् । एतत्प्रभावान्मे पुत्रो भावी चेति व्यचिन्तयत् ॥१०॥
उत्थाय प्रातराहेति पतिं प्रति पतिव्रता । अद्यापश्यमहं रात्रौ स्वप्ने सिंहं सह श्रिया ॥११॥
इति श्रुत्वा वचस्तस्याः स्थिरः स्थिररतिः पतिः । अभवच्छुभवद्वाक्यं श्रुत्वा प्रीतो भवेन्न कः? ॥
पतिः पत्नीं प्रति प्राह तव पुत्रो भविष्यति । सूर्यवद्भुवि तेजस्वी सर्वसर्वसहाधिपः ॥१३॥

५—प्रगुणाः प्रकृष्टाः अन्यसूरिजनापेक्षया, क्रोधाक्रोशगालिप्रमुखप्रतिकूलदोषरहितत्वात्, एकैकतोऽधिकत्वाच्च; गुणा भयानकमनोहरत्वादयो येषां ते प्रगुणाः । गुणाः शौर्यौदार्यसौन्दर्यशौण्डर्यादयः । 'पडिरूवो १ तेयस्सी २' इत्यादयः षट्त्रिंशत्सूरिसम्बन्धिनः, सप्तविंशतिः साधुसम्बन्धिनो वा । कथंभूताः गुणाः सद्गुणाः सन्तो विद्यमानाः सत्याः प्रशस्याः अर्चिता वा; पूर्वसूरीणां अपरसाधुजनानां च गुणानामपेक्षया सुभगत्वादयस्तत्तद्गुणप्रतिकूलाऽसुभगत्वादिदोषरहितत्वात्; येषां ते सद्गुणा इति गुणविशेषणं युक्तम् ॥५॥

६—श्रीईडरपुरमित्यत्र सन्ध्यऽकरणं प्रकटावबोधार्थं, सन्धौ हि डरपुरमित्यनिष्टनामाशङ्कानिरासार्थं च; विवक्षितत्वात् सन्धेः, 'भो भगो अघो अपूर्वस्येति' पाणिनीयसूत्रवत्; 'अइउऋऌ समाना' इति सारस्वतसूत्रादिवत् । अहं पूर्वो अहं पूर्व इत्यहंपूर्विका स्त्रियामिति गौडवचनवच्च । न चात्र 'संहितैकपदे नित्या' इति कथनात् श्रीईडरपुरमित्येकपदत्वात् नित्यसन्धिविधानाशङ्का करणीया; भो भगो अघो अपूर्वस्येत्यस्यैव एकपदत्वे सत्यपि सन्धेरकरणे ज्ञापकात् । श्रीईडरपुरं पुरं क इव राजेव । कथंभूतो राजा ? सदा धरालङ्करणं पृथिव्या अलङ्कारः । अलङ्करणशब्दस्य अजहल्लिङ्गत्वात् राज्ञो विशेषणे नपुंसकवचनं न दुष्टम् । पुरविशेषणे तु पुरशब्दस्य नपुंसकत्वात् नपुंसकवचनं विशिष्टमेवेति ॥६॥

८—रूपवत् सौन्दर्यमिव नाणकमिव वा यथा सौन्दर्यं नाणकं वा वल्लभं भवेत् तथा रूपा नाम्नी स्त्र्यपि ।

१३—सर्वस्याः सर्वंसहायाः पृथिव्याः अधिपः स्वामी सर्वसर्वसहाधिपः ।

पत्युरुक्तं वच ईदृक्षं श्रुत्वा सा मुमुदे हृदि । मम स्वामिन् सुतो भावी वेद्मीति प्रागचिन्तयम् ॥
पत्या सार्धं शुभान् भोगान् देवतास्पर्द्धयेव किम् । भुञ्जाना प्राधरद्गर्भं सा ततस्ततचित्तमुत् ॥
उत्सवेन सुखेनापि निराबाधतया तथा । तस्याः कुक्षौ सरस्यां सन् गर्भः पद्म इवैधत ॥१६॥
धर्मकर्माणि कुर्वन्ती पूरयन्ती च दोहदान् । गर्भयोग्यानि भोज्यानि भुञ्जाना चाप्यवर्तत ॥
चतुस्त्रिंशत्तमे वर्षे षोडशस्य शतस्य हि । पौषे मासे सिते पक्षे त्रयोदश्यां दिने रवौ ॥१८॥
नक्षत्रे रोहिणीनाम्नि सम्यग्योगसमन्विते । सर्वास्वाशासु सौम्यासु निष्पन्नायावनौ च ॥
स्थिरे वरे वृषे लग्ने शोभमाने शुभग्रहैः । उच्चस्थानस्थितैः सर्वैः स्वस्वस्वामिभिरीक्षिते ॥२०॥
परिपूर्णे तथा सार्धे नवमासावधौ शुभे । पुत्रं प्रासूत सा पूतजाग्रज्ज्योतिस्तनूदयम् ॥२१॥
निरातङ्का निरातङ्कं निश्शोका शोकवर्जितम् । सुभगा सुभगं सौम्या सौम्याकारं सुखाकरम्॥
—षड्भिः कुलकम् ।

स सदोचितबालाख्यगोत्रोदयकरोऽस्फुरत् । जगज्ज्योतिष्करोऽगारान्तःस्थः खस्थोऽर्यमेव हि ॥
अगायन् जन्मयोग्यानि गीतानि च सुयोषितः । वाद्यान्यऽवादयच्छ्रेष्ठी विविधानि दिवानिशम्॥
ततः प्रातः स्थिरश्रेष्ठी समाहूय महाजनान् । तेभ्योऽदान्नालिकेराणि सुतजन्म प्रियं यतः ॥२५
अभूज्जयजयाकारः सारः श्रेष्ठिस्थिरालये । आत्मसम्बन्धिनश्चान्ये लोका उदसवंस्तदा ॥ २६

---

१५–भोगान् शब्दादीन् भुञ्जाना अनुभवन्ती । भुञ्जाना इत्यत्र 'ताच्छील्यवयोवचनशक्तिषु चानश्' इत्यानश् ताच्छील्यार्थः ।

१६–पद्मशब्दः कमलवाची पुंनपुंसकलिङ्गत्वात् पुल्लिङ्गो व्याख्येयः ।

१७–दोहदशब्दः पुंनपुंसकः ।

२३–स बालोऽस्फुरत् अशोभत । कथंभूतो बालः ? सदा उचितबालाख्यगोत्रोदयकरः । कथंभूतः स बालः ? अगारान्तःस्थः सन् गृहमध्यस्थितः सन् जगज्ज्योतिष्करः । क इव ? उत्प्रेक्ष्यते; हि निश्चयेन खस्थः आकाशस्थितः अर्यमेव सूर्य इव । कथंभूतः सूर्यः ? सदा उचितबालाख्यगोत्रोदयकरः–उचिता योग्या बालः प्रथमतस्तत्कालोद्गतत्वात् बालक इत्याख्या नाम यस्य सः उचितबालाख्यः तत्कालोद्गतः सूर्यो बाल एवोच्यते । गोत्रे अर्थाद् उदयाचले । उदयं उद्गमनं करोतीति गोत्रोदयकरः । उचितबालाख्यश्चासौ गोत्रोदयकरश्चेति कर्मधारये उचितबालाख्यगोत्रोदयकरः । पुनः कथंभूतः अर्यमा ? जगज्ज्योतिष्करः ।

२५–तेषां सन्नालिकेराणि, ददौ यद्वल्लभः सुतः–इति पाठान्तरम् ।

२६–षुं प्रसवैश्वर्ययोः, गतावप्येके; भ्वादिः परस्मैपदी इत्यस्य अनद्यतनी प्रथमपुरुषबहुवचनं उदसवन् उत्सवान् चक्रुरित्यर्थः । तद्दर्शयति–

वर्द्धापकं गृहीत्वाशु योषितो यान्तु तद्गृहम् । सद्गीतानि च गायन्तु स्थिराङ्गजजनिर्यतः ॥ २७
ततोऽह्नि पञ्चमेऽर्कस्य दर्शनं शशिनो निशि । कारयामासतुस्तस्य पितरौ परमोत्सवात् ॥२८॥
एवं जन्मोत्सवे दिव्ये जायमाने दिवानिशम् । आजगाम श्रियां धाम दशमं सुदिनं दिनम् ॥
सगोत्रानादरात्तत्र निमन्त्र्य च महाजनान् । भक्तितो भोजयामास मृष्टान्नं लप्सिकादिकम्॥
तेषामिभ्यः ससभ्यानां नालिकेराण्यदात्ततः । चिरं जीव्यादयं बालो ददुरित्याशिषं च ते॥३१
वसत्यस्मिन् सदा लक्ष्मीर्बलवांश्च कुमारवत् । इति वासकुमारोऽयं पिता नामावदत्तदा ॥ ३२
दिव्यदेवाङ्गनं चाथ जलयात्रां महोत्सवात् । पुत्रस्याकुरुतां रूपं पितरौ प्रीतचेतसौ ॥ ३३ ॥
एवं जन्मोत्सवं तस्य कृत्वा तुतुषतुस्तराम् । पितरौ च तथैवान्ये तुतुषुर्नागरा नराः॥ ३४ ॥
अथ वासकुमारोऽसाववर्धत दिने दिने । कलारूपप्रतापाद्यैर्द्वितीयाचन्द्रमा इव ॥ ३५ ॥
श्रीमान् प्रसादनीयश्च सुरम्यो दर्शनीयकः । प्रतिरूपो ऽभिरूपश्च कलाकलितपुद्गलः ॥ ३६॥
—युग्मम् ॥
धात्रीभिः पञ्चभिः सम्यक् पाल्यमानो दिवानिशम् । स प्रापत्सप्तमं वर्षं पठनार्हं सदा शिशोः॥
शुभे मासे सिते पक्षे वरवारे वरे तिथौ । सुमुहूर्ते शुभे लग्ने सुयोगे सुदिने दिने ॥ ३८ ॥
कृत्वा महोत्सवं दिव्यं गजाश्वादि विराजितम् । नानाप्रकारवाद्यानां शब्दसन्दोहसुन्दरम् ॥
कान्तासन्ततिसंगीतगीताद्भुतविधायकम् । गीयमानयशःकीर्तिं विबुधैर्मागधादिभिः ॥ ४० ॥
विद्वदध्यापकाभ्यासे पिताऽध्यापयति स्म तम् । विद्याः सोऽधीतवान् सर्वाः पूर्वाधीत इवैव यत् ॥
—चतुर्भिः कलापकम् ।
अधीतसर्वविद्यं तं विलोक्य विनयान्वितम् । पितरौ सममोदेतां तस्मिंश्चास्निह्यतांतराम् ॥४२॥

---

२९—सुदिनशब्दः शोभनपर्यायः ।

३१—तेषामित्यत्र सम्प्रदानाभावान्न चतुर्थी ।

३३—प्रशस्तकुरुतामिति अकुरुतां रूपम् ।

३६—प्रसादनीयः पश्यतां जनानां मनःप्रसन्नताकारी । सुरम्यः सुष्ठु रमणीयः । दर्शनीयकः पश्यतां जनानां नेत्राणां न श्रमकारकः । प्रतिरूपः पश्यन्तो लोकाः पृथक् पृथक् प्रतिबिम्बमिव पश्यन्ति । अत एव अभिरूपो मनोहरः । अत एव कलाकलितपुद्गलः कलासहित-शरीरः । असौ वासकुमारो द्वितीया चन्द्रमाश्च एभिर्विशेषणैः सदृशौ ऐधेतामित्यर्थः । कुमार-पक्षे कलाकलितपुद्गलः विज्ञानकौशलान्विततनुः । चन्द्रपक्षे षोडशांशान्वितवनुरित्यर्थः ।

नव्यो नव्योऽभवत्स्नेहः पुत्रे पित्रोः क्षणे क्षणे। पितृपुत्रदशां वक्तुं नाशक्नोत्कोऽपि पण्डितः ॥
अप्रमाणे तथागाधे पुत्रप्रेमसरोवरे । पितरौ रसिकावास्तां हंसाविव निरन्तरम् ॥ ४४ ॥
श्रीमद्वासकुमारस्य दर्शने जनचेतसाम् । इच्छा न घटतेऽक्षीच्छा लभते च श्रमं न हि ॥ ४५ ॥
दिव्यं वासकुमारास्यपद्मं लोका व्यलोकयन् । वरं रूपरसं चैव प्रापिबन् भ्रमरा इव ॥ ४६

एवं वासकुमारजन्मन इमं रम्योत्सवं सोत्सवाः,
श्रुत्वा धर्मविधायिनो भविजना धर्मे कुरुध्वं रतिम् ।
श्रीमद्वासकुमार उत्तमकुलं पुण्याद् यथा चोत्तमाद्,
दिव्याः सम्पद आपदापदयुता यूयं यथा प्राप्नुत ॥

इति श्री बृहत्खरतरगच्छीय श्रीजिनराजसूरि सन्तानीय पाठक श्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराजपातशाह श्रीअकब्बर प्रदत्तजगद्गुरु-बिरुद-धारक श्रीहीरविजयसूरीश्वर पट्टालङ्कार पातिशाहि श्रीअकब्बरसभासंलब्ध दुर्वादिजयवाद भट्टारक श्रीविजयसेनसूरीश्वर पट्टपूर्वाचलसहस्रकरानुकारि पातिशाहि श्रीजिहांगीर प्रदत्त-महातपाबिरुदधारि श्रीविजयदेवसूरीश्वर गुणवर्णन प्रबन्धे श्रीविजयदेवमाहात्म्य नाम्नि महा-काव्ये श्रीविजयदेवसूरि जन्मोत्सववर्णनो नाम प्रथमः सर्गः ॥ १ ॥



४३–पितृपुत्रदशां पिता च पुत्रश्च पितृपुत्रौ तयोर्दशां व्यवस्थां पितृपुत्रदशाम् । तत्र पितृदशां नवनवोत्सवकरणभव्यभव्यबहुमूल्यवस्त्रसुवर्णालङ्कारादिवितरणपरमप्रेमधरणलक्ष-णाम् । पुत्रदशां विविधचाणक्यादिराजनीतिशास्त्राद्यध्ययनविनयशौर्यौदार्यसौन्दर्यशौण्डीर्य-चातुर्यादिलक्षणामवस्थाम्। कोऽपि पण्डितो वक्तुं न शक्नोत् न समर्थोऽभवत् ।

४४–हंसाविति हंसश्च हंसी च इति द्वन्द्वे पुमान् स्त्रिया इत्यनेन सहोक्तौ पुंसः शेषे हंसौ इति सिद्धिः । यथा ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ तथा हंसावित्यपि ।

४५–घटचेष्टायां चेष्टा ईहा भ्वादौ घटादिः, घटादीनामनेकार्थत्वादीहार्थोऽपि घटति-धातुरत्र हीनार्थो ज्ञेयो न ईहार्थः । ततोऽयमर्थः–न घटते वर्धते इत्यर्थः ।

४७–आपदिति आप्लृ व्याप्तौ लित्वादङ्प्रत्यये प्रथमपुरुषैकवचने सिद्धमित्यर्थः ।

# द्वितीयः सर्गः



अथ वासकुमारस्तद् भोगार्हं प्राप यौवनम् । यस्मिंस्त्यजति सच्छीलमर्यादां मौनयौवनम् ॥
मोमुह्यन्ते जना भोगे संसारारण्यचारिणः । यल्लब्धांभसि मोहेन मृगतृष्णां मृगा इव ॥२॥
दुष्करं सुकरं कर्म सुकरं च तृणोपमम् । यल्लब्ध्वा वेत्त्यमत्तोऽपि मर्त्योऽतिमदमत्तवत् ॥३॥
इन्द्रियाणि सुरम्याणि विकसन्ति दिने दिने । यस्मिन् सूर्योदये किं न पद्मानीव सुखाय तत् ।४।
ईदृशं यौवनं प्राप्तो जयदत्त इवाबभौ । श्रीमान् वासकुमारः स रूपवद् रूपमेव यः ॥ ५ ॥
अथ पुण्यात्मने तस्मै महान्तो व्यवहारिणः । ददुः कन्या जगन्मान्या लावण्यादिगुणैः शुभैः ॥
तथाप्येकस्य सभ्यस्य महेभ्यस्य यशस्विनः । कन्यामनन्यसौजन्यलावण्यां पुण्ययौवनाम् ॥७॥
दृष्ट्वा प्रीतावभूतां तत् पितरौ तद्गुणेरितौ । विज्ञायात्मीयपुत्रस्य योग्यां सौभाग्यसम्पदम्॥८॥
विवाहयितु कामौ तौ तां च तत्पितराविति । अयाचेतामिमां कन्यां दत्तमस्मत्सुताय हि ॥९॥
तदा च पितरौ तस्या अब्रूतां विनयादिति । अनयोरस्तु वीवाहः उभयेषां सुखावहः ॥१०॥
श्रुत्वेतीत्वं स्थिरः श्रेष्ठी वचः कन्यापितुः शुचि । आननन्द हृदानन्ददायी पाणिग्रहो न किम् ॥
एवं वीवाहसद्वार्तां व्यदधातां परस्परम् । प्रेमतो जातरोमाञ्चौ पितरौ पुत्रकन्ययोः ॥१२॥
स्वयं वासकुमारोऽथ प्रत्यबुध्यत सन्मतिः । प्रत्येकबुद्धवच्छुद्धसिद्धान्तोदितधर्मवित् ॥ १३ ॥

---

१—मौनं च मुनिसमूहः यौवनं च युवतीनां समूह इति समाहारद्वन्द्वे मौनयौवनम्, ऋषीणां समूहो युवतीनां समूहश्च यस्मिन् यौवने वयसि सच्छीलमर्यादां त्यजति । मुनीनां समूहो वृन्दं मौनं यौवनमिति चन्द्राचार्याद्यभिप्रायेण; वस्तुतस्तु ताद्धितप्रत्ययोत्पत्तेः प्रागेव पुंवद्भावेन भवितव्यम्; ततो युवतीनां समूहो यौवनं भिक्षादेरित्यणि जामिश्वाणिनाद्वितयत्घरे इति पुंवद्भावेतीति वर्णलोपे यौवनं चतुर्थवर्गपञ्चमांतोयम् । यत उक्तवान् भाष्यकारः—भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् । प्रत्ययविधाविति यथा—'सुरूपमतिनेपथ्यं, कलाकुशलयौवनम् । यस्य पुण्यकृतः प्रेष्यं, सफलं तस्य यौवनम् ॥' इति ।

५—रूपवत् मनुष्याकारधारि रूपमेव सौन्दर्यमेव ।

८—तत्पितरौ वासकुमारस्य मातरपितरौ तद्गुणेरितौ तस्याः कन्यायाः गुणा सौजन्यादयस्तैरीरितौ प्रेरितौ यौ तौ तद्गुणेरितौ ।

९—तौ श्रीवासकुमारस्य पितरौ कर्तृपदमेतत्, तत्पितरौ तस्याः कन्यायाः पितरौ तत्पितरौ तौ तथा कर्मपदमिदं तां कन्यां इति अयाचेतां याचतिर्धातुर्द्विकर्मकः इतीति किं इमां कन्यामस्मत्सुताय दत्तम् । त्रिभिर्विशेषकम् ।

धर्मात्पाति नरो राज्यं छत्रं शिरसि सन्धरन् । पापात्तस्य भवेद्दासो धावंस्तद्वाजिनः पुरः ॥
संपद्यन्ते मदोन्मत्ता हस्तिनश्च महाहयाः । धर्मात्पापाच्च जायन्ते तद्रजोहारिणो नराः ॥ १५
धर्माद्धनानि भूयांसि सेवकांश्च सुखावहान् । नरा मन्दिरमध्यस्था लभन्ते खेदवर्जिताः ॥१६
देशान्तरे भ्रमन्तोऽपि न लभन्ते धनांशकम् । पुरुषाः पौरुषं भूरि कुर्वन्तः पापतः सदा ॥१७
धर्माद्देवो नरश्चैव जायते रोगवर्जितः । पापात्तिर्यङ् सदा दुःखी नरके शोकसंयुतः ॥ १८ ॥
धर्माधर्मौ क्षयं नीत्वा हत्वा कर्माष्टकं तथा । अपवर्गमेवाप्नोति मानवो निरुपद्रवः ॥ १९ ॥
इति चेतसि निश्चित्य धर्माधर्मफलद्वयम् । परित्यज्याशुभं पापं कुर्यां धर्मं शुभं सदा ॥ २० ॥
दानं शीलं तपश्चैव भावना च भवापही । मुख्या धर्मस्य चत्वारः प्रकारास्तीर्थकृन्मताः ॥२१
कुर्यामेतान् विशेषेण विशेषसुखदायकान् । यथा लभेय सत्सर्गापवर्गानन्दसम्पदः ॥ २२ ॥
दानं ददेय सानन्दो बहुधर्थिभ्य आदरात् । पालयेयं सदा शीलं सुशीलो लीलयान्वितः ॥
व्यपोहति कृतं पापं दुर्गतिं यच्च लुम्पति। ददाति सम्पदः सर्वा विदध्यां तत्तपोऽप्यहम् ॥२४॥
कुर्वंस्त्रिविधं धर्ममिममर्हत्प्ररूपितम् । भावयेयमिमे धन्या नरा इति च चेतसि ॥ २५ ॥
विचिन्त्येत्यात्मनश्चित्ते तदा वासकुमारकः । नाभ्यमन्यत कन्याया विवाहं विषयी न यत् ॥२६॥
वैराग्यरङ्गमापन्नस्तन्नटो धर्मताण्डवम् । चिकीर्षुः पूर्वतो दानपूर्वरङ्गं व्यधात्तदा ॥२७॥
अथ पुत्रं पिता प्राह–पुत्रास्मत्प्रीतिहेतवे । विधेहि सन्ततेर्वृद्ध्यै कन्यावीवाहमुत्सवान् ॥२८॥
सन्ततिः परमो धर्मो गृहस्थानां विशेषतः । यतस्सा कथिता पूर्वैः पूर्वेषां पावनक्षमा ॥२९॥
त्रयोविंशतिरर्हन्तः परिणीतवरस्त्रियः । संजातानेकपुत्राश्च प्रान्ते प्रापुः शिवश्रियम् ॥ ३० ॥
वर्धमानजिनः पूर्वं विजहारतरां निशि । प्रागदीक्षितसच्छिष्यः शिष्यसन्ततिहेतवे ॥ ३१ ॥
एवं त्वमपि पुण्यात्मन् परिणीय वरस्त्रियम् । भुंक्ष्व भोगान् नृणां योग्यान् ततोनु त्वं परिव्रजेः ॥

---

२३–ददि दाने भ्वादिरात्मनेपदी विधिनिमन्त्रणेति लिङि उत्तमपुरुषैकवचनम् । ददीयेति पाठे डुदाञ् दाने अदादौ जुहोत्यादिरुभयपदी तत आत्मने पदे लिङि उत्तमपुरुषैकवचनम् ।

२७–तदा तन्नटो धर्मताण्डवं चिकीर्षुः पूर्वतो दानपूर्वरङ्गं व्यधात् इत्यन्वयः । स एव वासकुमार एव नटस्तन्नटः, धर्म एव ताण्डवं नर्तनं धर्मताण्डवं चिकीर्षुः पूर्वतः प्रथमतः दानपूर्वरङ्गं दानमेव पूर्वरङ्गः–गीत १ नृत्य २ वाद्यानां ३ त्रयाणां प्रारम्भः दानपूर्वरङ्गस्तं व्यधात् अकरोत् । कथंभूतः सन् तन्नटः—वैराग्यरङ्गं वैराग्यमेव रङ्गो नाट्यस्थानं वैराग्यरङ्गस्तं आपन्नः प्राप्तस्सन् । यथा नटो नाट्यस्थानं लब्ध्वा नर्तनं चिकीर्षुः प्रथमतः गीत १ नृत्य २ वाद्यानि ३ त्रीणि प्रारभते तथा वासकुमारोऽपि वैराग्यरङ्गं प्राप्तो धर्मं चिकीर्षुः दानमादितो ददौ इत्यर्थः ।

वचोभिर्विविधैरेवं प्रोक्तैः पित्रातिरागतः । नाभ्यमन्यत वीवाहं स कुमारः कुमारवत् ॥ ३३ ॥
एवं मात्रादिभिर्लोकैर्बन्धुभिस्स निवेदितः । नाङ्गीचकार वीवाहं शीलव्रतधृतिर्यतः ॥ ३४ ॥
लक्ष्मीं यशः प्रतापं च माहात्म्यं चाप्यरोगताम् । नरः प्राप्नोति शीलस्य प्रभावाद्वाञ्छितं यथा ॥
शीलप्रभावतो हेला सकलात्र टलेद्भुवि । उत्पद्येत सदा सौख्यं दुःखमात्रं कदापि न ॥ ३६ ॥
पालयेद[illegible]लं शीलं यो नरः शीलपालकः । वशीभवन्ति तस्याशु देवाः सर्वे च मानवाः ॥ ३७ ॥
अनेके सन्ति दातारो ऽनेके सत्पुरुषा अपि । तपस्विनोऽप्यनेके च न कश्चित् शीलपालकः ॥
तपस्विनो महान्तोऽत्र लोके द्वैपायनादयः । श्रूयन्ते तेऽपि च भ्रष्टाः शीलतः कीलिता इव ॥
दानतस्तपसोऽप्युग्रात् भावनायाश्च धर्मतः । ज्ञात्वा सुदुष्करं शीलं यतध्वं तत्र पण्डिताः ॥४०॥
ब्रह्मचर्यव्र[illegible] सम्यक् पालिते पालितानि यत् । शेषव्रतानि चत्वारि महान्ति यतिनामपि ॥
महाव्रतानि पञ्चैव पालनीयानि यत्नतः । स्वर्गापवर्गसौख्यानां दायकानि यतः किल ॥४२॥
चारित्र[illegible]हणात्तानि पालये[illegible]र्मुमुक्षवः । मनोवचःकायशुद्ध्या विनातीचारसंचरम् ॥ ४३ ॥
विचिन्त्येति च निश्चित्य स्वचित्ते शीलपालनम् । अङ्गीचकार चारित्रग्रहणं स कुमारकः॥४४॥
पित्रोरग्रे [illegible] विनयात्समुदैकदा । यद्याज्ञा भवतोर्मे स्याद् गृह्णीयां चरणं तदा ॥ ४५ ॥
पुत्ररत्न किमीदृक्षमिदं वदसि कद्वद । बाल्ये वयसि चारित्रग्रहणं युज्यते कथम् ॥ ४६ ॥
दुःखरक्ष्योदिता दीक्षा मुमुक्षूणां जिनेश्वरैः । सा ग्राह्या वार्धके प्रान्ते भुक्तभोगैर्नृभिः खलु ॥
[illegible]ो यस्यां द्वाविंशति परीषहाः । यादृशैस्तादृशैः पुंभिस्सहनीया न दुस्सहाः ॥४८॥
क्षमः सोढुं कथं त्वं तान् कथं तांश्च [illegible] । बाललीलाकलाशीली यतः कोमलपुद्गलः ॥
अभुक्तभोगसंभोगं कन्दर्पो दर्पतो नरम् । दुष्करे रक्षितुं शीलं यौवने व्यथते तराम् ॥५०॥
अतो भोगान् नरैर्भोग्यान् नरयोग्यान् सुरेप्सितान् । विलासिन्या सहाजस्रं विलसालससत्कलम् ॥
सुकृतोपार्जिताः प्राप्ता इमा लक्ष्म्यो मनीषिताः । अनेके सेवका एते तत्कालाज्ञाविधायकाः ॥
सप्तभूममिमं दिव्यं मन्दिरं स्वर्गृहोपमम् । भाण्डागारमिदं सर्वं धान्यागाराण्यमूनि च ॥५३॥
सर्वाण्येतानि विद्यन्ते तव पुत्रोत्तमालये । एतदर्थे पुमांसोऽन्ये क्लिश्यन्तो नाप्नुवंति हि ॥ ५४ ॥
धनोपार्जनचिन्तापि कश्चनापि निवारकः । शरीरे रोगचिन्तापि नास्ति पुण्यात्पुराकृतात् ॥
इमे हि विविधा अश्वा इमे उष्ट्रा इमे रथाः । बलवन्तो बलीवर्दा इमे सन्ति पुरस्तव ॥ ५६ ॥

---

३३—स कुमार वासकुमारो वीवाहं नाभ्यमन्यत । किंवत्? कुमारवत्—स्वामिकार्त्तिकेयवत् । स्वामिकार्त्तिकेयो हि न परिणीतवान् इति प्रसिद्धिः । अथवा कुमारवत् बालकवत्; यथा बालको हठात् सदसदपि किञ्चिद्वस्तु स्वस्य हितमहितं वा मनीषितमेव मन्यते न तदन्यदिति । तथा वासकुमारोऽपि स्वस्यानीप्सितमहितं संसारिणामीप्सितं हितं वीवाहं न मन्यत इत्यर्थः ।

खल्लूरिकायां त्वं पुत्र तेषामर्वाक् परागुभ्रमैः । रमस्व खुरलीं कुर्वन् सवयः सखिभिः सह ॥५७॥
पश्यन्तस्त्वां तदा लोकास्त्वदालोकनलोचनाः । कोऽयं राजकुमारोऽयं भणिष्यन्ति मिथोन्विति॥
इति प्रेमवचोऽवोचत् पिता पुत्रं तथापि हि । न व्यरंसीत्स चारित्रात् चारित्रैकधृतिर्यतः ॥५९॥
इत्यादिवचनैः पुत्रं प्रतिबोधयितुं पिता । करग्रहे क्षमा नाभूद्दक्षोऽपीन्दुरिवाम्बुजम् ॥ ६० ॥
दृढधर्मा प्रियधर्मानन्तशब्दद्वयीति यत् । सिद्धा व्याकरणे शब्दादर्थाश्चास्मिन् शिशौ स्थिता ॥
जगदुः कवयो लोका नागराः इति सूनृतम् । दृढधर्मा पुमानेष प्रियधर्मा तथा तदा ॥ ६२ ॥
प्रोक्तः संसारसौख्यार्थमिति पित्रादिभिर्जनैः । संसारं त्यक्तुकामः स नाभ्यमन्यत तद्वचः ॥
एवं च पितरौ ज्ञात्वा चारित्रग्रहणे दृढम् । चेतः पुत्रस्य तच्चेतःप्रीतये वदतामिति ॥ ६४ ॥
चारित्रग्रहणे पित्रोरनुज्ञास्ति तवाधुना । सगोत्रादपरीवारयोरथ ॥ ६५ ॥
अददातामथैवं तौ शिक्षां गद्गदया गिरा । दीक्षामादाय पुत्र त्वं साध्वाचारान् समाचरेः ॥६६॥
भणेथाः प्रवणीभूय ग्रन्थान् व्याकरणादिकान् । सिद्धान्तान् ज्यातिषग्रन्थान् तर्कग्रन्थांश्च भूयसः॥
विनयेः प्रणयेः प्रीतो निर्णयेः पुत्र चेतसा । गुरोः पृष्ठं परैः प्रोक्तं सूनृतं वेति वानृतम् ॥६८॥
स्मरेर्ग्रन्थान् पुराधीतान् सूत्रतश्च तथार्थतः । विस्मृतं स्मारयेरन्यान् पठितं पाठयेः सुत ॥
पञ्चेन्द्रियाणि संयम्य नियम्य विषयान् पुनः । संयमं पालयेः पुत्र स्वकीयसुखहेतवे ॥ ७० ॥
गोपयित्वा प्रवर्तेथाः सर्वथेन्द्रियपञ्चकम् । पुत्र कूर्म इव ग्रीवाचतुश्चरणपञ्चकम् ॥ ७१ ॥
भवेर्निरुपलेपस्त्वं कर्मलेपेन सर्वदा । पयःकर्दमलेपेन पद्मपत्रमिवाङ्गज ॥ ७२ ॥
ग्रामद्रङ्गकुलादीनि नालम्बेथाः कदापि हि । स्तम्भादीनि त्वमाकाशमिव लोकप्रकाशक ॥
सौम्यलेश्यां दधीथास्त्वं चन्द्रमा इव सर्वदा । आदित्य इव तेजस्वी स्यास्तपस्तेजसाञ्जसा ॥
उत्पन्ने सुखदुःखादौ समचित्तो भवे भवेः । वर्य्यगांभीर्यसंयुक्तः समुद्र इव सर्वदा ॥ ७५ ॥

---

५७–हे पुत्र ! खल्लूरिकायां चउगान इति भाषाप्रसिद्धायां श्रमसाधनाभूमौ तेषामश्वादीनामर्वाक् पराग् भ्रमे 'उरहापरहा फेरवानइ विषइ' इति भाषाप्रसिद्धे खुरलीं अभ्यासं कुर्वन् रमस्व ।

५८–तदा खल्लूरिकायां अश्वादीनां अर्वाक्पराग् भ्रमणाभ्यासकाले लोकास्त्वां पश्यन्तो नु वितर्के इति मिथो भणिष्यन्ति । इतीति किम् ? एकः कथयति–कोऽयम् ? अपर आह–राजकुमारोऽयम् ।

६८–भो पुत्र ! गुरोः विनयेः विनयं कुर्या इत्यर्थ । भो पुत्र ! प्रणयेः कथयेरित्यर्थः । भो पुत्र ! परैरन्यैर्गच्छवासिभिः साधुभिः परगच्छवासिभिः साधुभिः अन्यतीर्थिभिः प्रतिवादिभिर्वा प्रोक्तं कथितं सूनृतं सत्यं वा अनृतमसत्यं वा इति निर्णयेः निर्णयं कुर्या इत्यर्थः । कथं भूतस्त्वं ? चेतसा प्रीतः ।

२

स्तकानेकसच्छिष्यश्रावकादिपरिच्छदे । पक्षीव ममतां सर्वां विप्रमुञ्चेस्त्वमात्मज ॥
समुत्पन्ने न कम्पेथाः परीषहाद्युपद्रवे । दुःखदायिनि देहस्य पुत्रमेरुरिवोत्तम ॥ ७७ ॥
त्वं भवेः सर्वथा शुद्धहृदयः सर्वसाधुषु । शारदाम्भ इव प्रायः सर्वर्तुषु सुनिर्मलम् ॥ ७८ ॥
प्रदायेत्यादिकां शिक्षां शिक्षादानविचक्षणौ । प्रपतच्चक्षुरस्रू तौ व्यरजेतां तदा सुतात् ॥ ७९ ॥
दीक्षादेशं च सच्छिक्षां दीक्षाया रक्षणे तदा । लब्ध्वा वासकुमारोऽयं हृदये मुमुदेतराम् ॥८०॥
चारित्रं द्विविधं प्रोक्तं सर्वतो देशतस्तथा । साधूनां च गृहस्थानां मनीषितफलप्रदम् ॥८१॥
इति वासकुमारोऽथ चिन्तयामास मानसे । सर्वविरतिचारित्रमाश्वंगीकरवाण्यहम् ॥ ८२ ॥
धर्मेऽन्तराया भूयांसः संभवन्ति यतः सदा । अतो यतेयं चारित्रग्रहणे त्वरितं खलु ॥ ८३ ॥
देशविरतिचारित्रं पालयेयमथो पुरा । वीरसेनमहीपाल इवेति स व्यचारयत् ॥ ८४ ॥

तद्यथा—देशविरतिचारित्रं स प्रावर्तत पालयन् ।
सर्वविरतिचारित्रं जिगृहीषुस्ततः पुनः ॥ ८५ ॥

पूर्वं कुर्यां गुरोर्वर्यां परीक्षां सर्वसाधुषु । गृह्णायां च ततश्चारु चारित्रं सर्वतः स्फुटम् ॥८६॥
चारित्रं सर्वशास्त्राणां पठनं संयमस्तपः । इत्यादि निर्वहेत्सम्यक् संयोगे सद्गुरोर्यतः ॥८७॥

एवं वासकुमार एष चरणे चेतो यथाचीकरत्
श्रीश्रीवल्लभपाठकेन पठितं पापठ्यमानं बुधैः ।
श्रुत्वा तच्च तथा जनाः सुमनसः संसारवासोद्भवम्
सौख्यं वैषयिकं विहाय विमलं तस्मिन् कुरुध्वं मनः ॥ ८८ ॥

इति श्री बृहत्खरतरगच्छीय श्रीजिनराजसूरि सन्तानीय पाठक श्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराजपातिसाहि श्रीअकब्बर प्रदत्तजगद्गुरु—विरुद-धारकभट्टारक श्रीहीरविजयसूरीश्वर पट्टालङ्कार पातिसाहि श्रीअकब्बरसभासंलब्ध दुर्वादिजय-वादभट्टारक श्रीविजयसेनसूरीश्वर पट्टपूर्वाचलसहस्रकरानुकारि पातिसाहि श्रीयहांगीर प्रदत्त-महातपाबिरुदधारिभट्टारक श्रीविजयदेवसूरीश्वर गुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्य नाम्नि महाकाव्ये श्रीविजयदेवसूरि समुत्पन्नचारित्रग्रहणभाववर्णनो द्वितीयः सर्गः ॥ २ ॥

# तृतीयः सर्गः

अथ वासकुमारः सन् कुर्वन् गुरुपरीक्षणम् । लब्धवान् सद्गुरुं तं च बुद्धवान् गौतमाधिकम् ॥१॥

तद्यथा—अथाभूत्स पुरा वीरश्चतुर्विंशो जिनेश्वरः ।
शासने यस्य भूयांसो गच्छाः सन्त्युदितश्रियः ॥२॥

तेषु गच्छस्तपानाम प्रसिद्धोऽस्ति प्रसिद्धिमान् । विधानात्तपसः शश्वद्धुस्तपस्यविशेषतः ॥३॥

तत्र वीरजिनाधीशपट्टानुक्रमसंश्रितः । षट्पञ्चाशपदं सूरिरानन्दविमलोऽश्रयत् ॥४॥

आचारं शिथिलं त्यक्त्वा व्यधादाचारमुत्कटम् । श्राद्धलोकांश्च्युतान्धर्मादादधार च यः क्षणात् ॥

महेभ्यानां महेभ्यानां पुत्राणां च शतानि च । त्याजयित्वा कुटुम्बादि मोहं दीक्षयसिस्म च ॥

आनन्दविमलसूरेः सप्तपञ्चाश[त]त्पदे । विजयदानसूरीन्द्रः सोभाद् भानुरिवोदये ॥ ७ ॥

श्रीस्तम्भतीर्थ-पत्तन-श्रीराजनगरादिषु । जिनबिम्बशताब्जानि प्रतिष्ठां योऽनयत् क्षणैः ॥८॥

---

४-६—सन्ततपागच्छे स आनन्दविमलसूरिः षट्पञ्चाशपदं षट्पञ्चाशतः पूरणं षट्पञ्चाशं तच्च तत्पदं च स्थानं षट्पञ्चाशपदं ५६ तत् अश्रयत् असेवत । कथंभूतः आनन्दविमलसूरिः? वीरजिनाधीशपट्टानुक्रमसंश्रितः वीरजिनाधीशात्पट्टानां योऽनुक्रमस्तं संश्रितो यः स तथा; द्वितीयाश्रितातीतेति द्वितीया तत्पुरुषः । स कः य आनन्दविमलसूरिः शिथिलं आचारं त्यक्त्वा उत्कटं आचारं सिद्धान्तप्रणीतगौतमादिगणधरस्थूलभद्रादिसाधुयथाविधिविहिततपःक्रियादि-समाचरणं व्यधात् । चः पुनः धर्माच्च्युतान् श्राद्धलोकान् क्षणात् आदधार उद्धृत-वान् । तथा चात्र वार्तालेशः—श्रीआनन्दविमलसूरिः क्रियाशिथिलबहुलसाधुलोकपरिवृतोऽपि संवेगरङ्गतरङ्गनिश्चलभावितचेताः श्रीविक्रमनृपाद् द्व्यशीत्यधिक पञ्चदशशत १५८२ वर्षे कतिचित्साधुपरिवृतः श्रीमदर्हत्प्रतिमाप्रतिषेध १ साधुजननिषेध २ प्रमुखोत्सूत्रप्ररूपणरूप-समुद्रे ब्रुडतोऽनेकलोकान् विलोक्य करुणारसरसिकमानसः श्रीहेमविमलसूरिगुरुप्रवराज्ञया शिथिलाचारपरिहरणलक्षणक्रियोद्धरणप्रवहणेन तान् तत्कालात्समुद्धृतवान् । तथा महेभ्यानां महेभ्यपुत्राणां चानेकानि शतानि प्रतिबोध्य कुटुम्बधनधान्यादि मोहं प्रतिषेध्य च प्राव्राजितवान् इति श्लोकद्वयार्थः । एवं चास्यानेके अवदाताः सन्ति तांश्चात्र ग्रन्थविस्तरभिया नाकथयाम नचालिखाम ।

७-८—उदये उदयाचले णीग्प्रापणे अस्य द्विकर्मत्वात् । जिनबिम्बशताब्जानि प्रतिष्ठामित्युभ-यत्र कर्म । क्षणैरुत्सवैः । श्रीराजनगरादिषु इत्यत्र आदिशब्दात् महीशानक-गन्धारबन्दिरादिग्राह्यम् ।

शत्रुञ्जयगिरेर्मुक्तिं षाण्मासिकीमकारयत् । यस्योपदेशसम्बुद्धो श्रुतपूर्वी रराज सः ॥९॥
सुरत्राणमहिमूंद-राजमान्यो महर्द्धिकः । गलराजाभिधो मन्त्री यात्रां चक्रे च चक्रिवत् ॥१०॥
तत्पट्टमुद्रिकाहीरो हीरविजयसूरिराट् । सोऽष्टपञ्चाशत्पट्टलक्ष्म्या लसति विष्णुवत् ॥ ११ ॥
यस्य सौभाग्यवैराग्यनिःस्पृहत्वादिसद्गुणैः । रञ्जितः स्तम्भतीर्थस्य व्ययं सङ्घो व्यधादिति॥
इतीति किं तदाह—
व्याख्यानादिषु कार्येषु कार्येषु वरसूरिभिः । कोटिमेकां सटङ्कानां तस्मिन्नव्ययत् स्थिते ॥
यस्य प्रतिपदं पादपद्मन्यासे सदाऽभवत् । सुवर्णटङ्करूप्यादि नाणकानां प्रमोचनम् ॥ १४ ॥
मुक्ताफलादिभिर्द्रव्यैर्बहुमूल्यैः शुभप्रदम् । रचनं स्वस्तिकानां च पुरतस्सोभिनन्दिति ।युग्मम् ।

---

९-१०—स विजयदानसूरिः रराज । स कः ? यस्योपदेशसम्बुद्धो गलराजाभिधो मन्त्री अश्रुतपूर्वां षाण्मासिकीं शत्रुञ्जयगिरेर्मुक्तिं अकारयत् । च पुनः चक्रिवत् भरतचक्रिवत् यात्रां चक्रे । कथंभूतो गलराजभिधो मन्त्री ? सुरत्राण-महिमून्दराजमान्यः-सुरत्राणमहिमूंदः पातसाहिः प्रसन्नमनाः श्रीगलराजमन्त्रिणे पर्यस्तिकावाहनं 'नगदलमलिक' इति बिरुदं च दत्तवान् । पुन क० महर्धिकः । श्रीविजयदानसूरिप्रदत्तोपदेशप्रतिबुद्धः प्रबुद्धशत्रुञ्जयतीर्थयात्राफलः श्रीसुरत्राण-माहिमून्दभूपतिमाननीयो मन्त्रिगलराजोऽपरनाम श्रीनगदलमलिकोऽश्रुतपूर्वां षाण्मासिकीं शत्रुञ्जयमुक्तिं कारयित्वा सर्वदेशनगरपुरग्रामादिषु कुङ्कुमपत्रिकाप्रेषणनिमन्त्रणानेकदेशनगर-ग्रामाद्यागतश्रीसङ्घसमेतः श्रीशत्रुञ्जययात्रां मुक्ताफलादिना श्रीशत्रुञ्जयवर्धापनं च श्रीभरत-चक्रवर्तीव चकारेति ।

११—स हीरविजयसूरिराट् अष्टपञ्चाशत्पट्टलक्ष्म्या लसति क्रीडते । किं वत् ? विष्णुवत् नारायण इव । स कः ? यत्तदोर्नित्याभिसम्बन्धात्—यः तत्पट्टमुद्रिकाहीरः श्रीविजय-दानसूरिपट्टरूपमुद्रिकायां हीरोपमः अधिकशोभाविधायित्वात् । श्रीहीरविजयसूरीणां विक्रमनृपात् त्र्यशीत्यधिके पञ्चदशशत वर्षे १५८३ मार्गशीर्षशुदि नवमीदिने प्राल्हादनपुरवास्तव्यः श्रीऊकेशज्ञातीय साह कुंरा भार्या नाथी गृहे जन्म, षण्णवत्यधिके पञ्चदशशत वर्षे १५९६ कार्तिकवदि द्वितीयादिने पत्तननगरे दीक्षा, सप्ताधिके षोडशशतवर्षे १६०७ नारदपुर्यां श्रीऋषदेव प्रासादे पण्डितपदम्, अष्टाधिके षोडशशतवर्षे १६०८ माघ सुदि पञ्चमी दिने नारदपुर्यां श्री वरकाणकपार्श्वनाथसनाथे श्रीनेमिनाथप्रासादे वाचकपदम्, पञ्चादशाधिके षोडशशतवर्षे १६१५ सीरोहीनगरे सूरिपदं बभूवेति ।

१२-१३—स श्रीस्तम्भतीर्थवासी सङ्घः तस्मिन् श्रीहीरविजयसूरौ स्थिते एकां टङ्कानां कोटिं अव्ययत् प्रभावनादिभिर्द्रव्यव्ययं चकार । व्ययण् वित्तसमुत्सर्गे चुरादौ अदन्तः पर-स्मैपदी । केषु व्याख्यानादिषु कार्येषु कर्मसु, कथंभूतेषु वरसूरिभिः कार्येषु ।

बिम्बानि कुन्थुनाथस्य प्रत्यतिष्ठद्य उत्सवात् । सीरोहीनगरे भाति स हीरविजयो गुरुः ॥
तथा नारदपुर्यां यः प्रत्यतिष्ठन्महोत्सवात् । जिनबिम्बान्यनेकानि स सूरिर्वर्तते भुवि ॥१७॥
श्रीस्तम्भतीर्थ-पत्तन-श्रीराजनगरादिषु । सहस्रशोऽर्हतां बिम्बप्रतिष्ठां सोऽस्ति यो व्यधात्॥१८॥
लुङ्कामतपतिर्बुद्धः स ललौ मेघजी ऋषिः । दीक्षां नवीनां यस्याग्रे स सूरिर्भुवि भासते ॥१९॥
श्रीमत्यहम्मदावादनगरे नगरोत्तमे । ज्ञात्वा लुङ्कामतैश्वर्यमिति दुर्गतिकारणम् ॥२०॥
आधिपत्यं च दीक्षां च त्यक्त्वा लुङ्कामतस्य हि । साधुभिः पञ्चविंशत्या संयुतोऽर्हन्मतौ रतः ॥
सूरिसेवैकचित्तोऽदात् पातिसाहिरकब्बरः । स्वर्वादित्राण्यनेकानि यस्य दीक्षामहोत्सवे ॥२२॥
—चतुर्भिर्विशेषकम् ॥

ख्यातोऽवदात एतादृक् श्रुतपूर्वो न कस्यचित् । तमवाप यदा सूरिरासील्लोके तदाद्भुतम् ॥
यदीयोपशमादीनां गुणानां सत्यवर्णनाम् । प्रधानपुरुषैः प्रोक्तमशृणोदेकदा तदा ॥२४॥
कालेऽस्मिन्नीदृशः कः स्यादिति चित्ते चमत्कृतः । तस्याचिन्तयच्चित्ते पातिसाहिरकब्बरः॥२५
इत्यचिन्तयत्–इतीति किं तदाह— [ –युग्मम् ।
तमाकार्य निरीक्षेय परीक्षेय च तद्गुणान् । पृच्छेयं च वृषः कीदृक् ततो वन्देय भक्तितः॥२६
सोऽभ्यपृच्छत्तदा चैवं प्रधानपुरुषान्प्रति । विचरत्यधुना कुत्र क्व च तिष्ठति तद्वद ॥ २७ ॥
ते प्राहुस्तद्वचःभीता इति प्राञ्जलयस्तदा । गन्धारबन्दिरे स्वामिन्, सूरिर्वसति सम्प्रति ॥२८॥
आकर्ण्येत्युभयाकर्णि जातरोमाञ्चिताङ्गरुक् । कदागच्छेत्कदा तं च देयौत्सुक्यतस्त्विति ॥२९॥
फुरमानं तदाहूत्यै लेखयामि तदाद्भुतम् । स्वीयनामाङ्कितं सत्यमिति चित्ते व्यचिन्तयत् ॥३०॥
लेखयित्वा तदा दिव्यं सकाशात्स्वनियोगिनः । फुरमानं घनाभानबहुमानोहितम् ॥३१॥
आज्ञाविधायिनो विज्ञान्स प्रेष्यान् प्रेषयत्तराम् । तेषां पाणौ च दत्त्वाशु प्रति गन्धारबन्दिरम्

१९-२०—स सूरिः श्रीहीरविजयसूरिर्भुवि भासते शोभते । स कः यस्य श्री हीरविजयसूरेरग्रे स मेघजी ऋषिर्नवीनां दीक्षां ललौ । कथंभूतो मेघजीऋषिः लुङ्कामतपतिः । पुन कथंभूतो मेघजीऋषिर्बुद्धः प्रतिबुद्धः अर्हत्प्रतिमापूजावन्दनादीनामाम्नानात् । किं कृत्वा ? लुङ्कामतैश्वर्यं दुर्गतिकारणमिति ज्ञात्वा । क्व दीक्षां ललौ? श्रीमति अहम्मदावादनगरे । कथंभूते नगरोत्तमे । पुनः किं कृत्वा हि निश्चितं लुङ्कामतस्य आधिपत्यं पुनर्दीक्षां त्यक्त्वा । पुनः कथं० मेघजीऋषिः ? पञ्चविंशत्या साधुभिः संयुतः । पुनः कथं० अर्हन्मतौ रतः अर्थात् अर्हत्प्रतिमाया अस्तित्वपूजनप्रणमनादीनङ्गीकरणे रतः । स कः ? यस्य मेघजीऋषेर्दीक्षा महोत्सवे अकब्बर पातिसाहिः अनेकानि स्ववादित्राण्यदात् । कथं० अकब्बरपातिसाहिः सूरिसेवैकचित्तः—सूरेः श्रीहीरविजयनाम्नो भट्टारकस्य सेवायां एकं चित्तं यस्य स तथा । मेघजी ऋषिरित्यत्र ऋत्यक इति प्रकृतिभावः ।

ततश्च तत्र ते गत्वा नत्वा तं भ्रमरायितम् । विदुः स्तत्कराम्भोजे फुरमानं मनोहरम् ॥३३॥
ततः प्रीतमनाः सूरिः फुरमानमवाचयत् । गन्धारबन्दिरश्रीमत्सर्वसङ्घसमक्षकम् ॥ ३४ ॥
तदा सङ्घो हृदानन्दत् श्रुत्वा तल्लिखितं वचः । प्रेष्येभ्यश्च ददौ द्रव्यं वाञ्छितं जीवितोचितम्
बुबोधयिषया तस्य सङ्घमापृच्छय सोऽचलत् । साधुभिः सह सच्छूरैर्भूपवद्दिग्जिगीषया ॥३६॥
साधयन् द्विषतो लोकान् श्राद्धांश्च प्रतिबोधयन् । स्थापयन् सुकृते स्वीयानन्यांश्चोत्थापयन्नघात्॥
विहरन् स क्रमेणैवं जिनवत्समवासरत् । आगरानगराभ्यर्णे फत्तेपुरपुरे बहिः ॥३८॥
एकीभूय ततः सङ्घस्तत्रत्योऽतिमहोत्सवात् । गत्वा चाभिमुखं नत्वा पुरान्तस्तं समानयत् ॥
धर्मोपदेशदानेन ततोऽमृतसद्गिरा । सूरिस्तांस्तोषयामास दातेव जगतो जनान् ॥ ४० ॥
पातिसाहिं तदैवैवमबलफजलोऽवदत् । पातिसाहिप्रधानानां शिरस्सु सुशिरोमणिः ॥ ४१ ॥
य आहूतस्त्वया सूरिः, स साम्प्रतमिहागतः । पातिसाहिरिति श्रुत्वा, ब्रवीति स्मेति तं मुदा ॥
अन्तरानयतं त्वं प्राक् यथा वन्देय भक्तितः । सिद्धये च सर्वथा सद्यो मदीयोऽयं मनोरथः॥
अबलफजलाख्योऽपि सूरिमाहूय सादरम् । पातिसाहेः सकाशे स्राक् तदादेशात्समानयत् ॥
तदोपाध्यायशार्दूल–विमलहर्षमुख्यकैः । साधुभिः सहितः सूरिः पातिसाहिं मुदामिलत् ॥
आस्थानमण्डपे स्वीयेऽभ्युपवेश्य च तं गुरुम् । प्रणम्य प्राञ्जलीभूय सोऽभ्यपृच्छदिति स्फुटम्॥
इतीति किं ? तदाह—
स्वागतं स्वागतं स्वीये काये शिष्यादिकस्य च । सूरिराह तदेत्यस्ति तद्धर्मात्तव चेक्षणात् ॥४७

---

३७–तत्र गन्धारबन्दिरे; तं श्रीहीरविजयसूरिं । तस्य श्राहारविजयसूरेः कराम्भोजं करकमलं तत्कराम्भोजं तस्मिन् । तस्मिन् पातिसाहावकब्बरे । तस्य पातिसाहेरकब्बरस्य बुबोधयिषा धर्मादौ बोधयितुमिच्छा तया बुबोधयिषया । किं कुर्वन् द्विषतो लोकान् प्रतिवादिनो जनान् साधयन्; चः पुनः श्राद्धान् अर्थात् अपरपरशासनधर्मान् सिद्धान्तानुसारेण स्वमुखप्ररूपितधर्मं श्रद्धावतो लोकान् प्रतिबोधयन् ज्ञापयन् । पुनः किं कुर्वन् ? स्वीयान् प्रस्तावान् स्वमुखप्ररूपितधर्मकारिणो निजान् लोकान् सुकृते धर्मे स्थापयन् । पुनः किं० ? चः पुनः अन्यान् प्रमारादिकान् राजादीन् माहेश्वरादिधर्मकारिणो वा लोकान् अघात् पापात् द्वीन्द्रियादिपञ्चेन्द्रियजीवव्यापादनलक्षणात् उत्थापयन् प्रायश्चित्तालोचनादिना निवारयन् इत्यर्थः । भूपपक्षे द्विषतो लोकान् वैरिणो जनान् श्राद्धान् अर्थात्स्वसेवाज्ञाकरणे श्रद्धावतः सेवकान्, न्याये प्रवर्तध्वं अन्यायान्निवर्तध्वमिति प्रतिबोधयन् ज्ञापयन्, स्वीयान् आत्मीयान् प्रस्तावात् पुत्रादीन् सगोत्रान् सुकृते राज्यसम्बन्धिनि प्रधानकर्मणि पुण्ये वा स्थापयन्, अन्यान् पुत्रादिसगोत्रेभ्योऽपरान् ग्रामनगरवासिनो जनान् अघात् चौर्याब्रह्मचर्यादिलक्षणात् पापात् उत्थापयन् दण्डादिदानेन निराकुर्वन् इत्यर्थः ।

कीदृशं गौरवं १ धार्मं २ स्वरूपं पारमेश्वरम् ३ । कथं चास्मादृशैः पुंभिः प्राप्यते परमेश्वरः ॥
इत्यादि धर्मसम्बन्धी विचारश्चतुरोचितः । श्रीमता साहिना प्रष्टुमारेभे च परस्परम् ॥४९॥
तदाऽवादीदिदं वादी स्याद्वादी प्रतिवादिनम् । एतत्स्वरूपं प्राप्तिं च, शृणु त्वं पारमेश्वरीम्॥
तद्यथा-दर्शनानि हि षट्सन्ति सन्ति तद्गुरवोऽपि षट् । शासनान्तरभेदेन गुरवो बहवोऽपि च ॥
बुद्धेशानादयस्तेषां देवास्सद्गुरवोऽपि च । विषयादौ सदा सक्ताः सम्यग् जानाति तान् भवान् ॥
धर्मोऽपि तादृशस्तेषां विषयादौ प्रवर्तनात् । तपस्सु च फलादीनामाहारान्निशि भोजनात् ॥

—इत्यपरशासने गुरोर्धर्मस्य च स्वरूपम् ।

तेषां मध्यादिमं जैनं धर्मं शुश्रूषसि प्रभो ! । श्रोतुं तं च त्वमर्होऽसि मां ब्रुवन्तं च तं शृणु ॥
साधुश्रावकभेदाभ्यां धर्मोऽयमुदितो द्विधा । पञ्चव्रतो यतीनां स्यात्, श्राद्धानां द्वादशव्रतः ॥
इति सत्यपि भेदेऽस्मिन् सर्वसाधारणः खलु । धर्मोऽभिमेत एवायमहिंसा १ संयमः २ तपः ३ ॥
धर्मोऽयं तीर्थकृत्प्रोक्तो दायी स्वर्गापवर्गयोः । क्रियमाणः सदा लोकैरेतद्दोषविवर्जितः ॥५७॥

—इति धर्मस्वरूपम् ।

जीवलोकस्य यो बन्धुर्दुर्गत्यम्बुधिपारगः । ज्ञानादिना महाभागो गुरुः स शिवसाधकः ॥५८॥
क्षीरास्रववचा नित्यं मध्वास्रववचा ध्रुवम् । शिक्षां धर्मोपदेशं च यो दत्ते स गुरुर्मतः ॥५९॥
दुर्जयान् विषयान् सर्वान् कषायांश्च गृहंगृहाः । य उज्झति मनोहर्षविषादौ स गुरुर्भवेत् ॥६०॥
त्यक्त्वा वैरं विरोधं च दोषानष्टादशापि च । प्रसन्नवदनो यः स्यात् स गुरुः सद्गुणः स्मृतः॥

—इति गुरुस्वरूपम् ।

रागद्वेषौ सदा हन्ति दुष्टकर्माष्टकद्विषः । विषयान यः कषायांश्च स भवेत् परमेश्वरः ॥ ६२ ॥
त्यक्त्वा राज्यं विदध्याद्यस्तपश्चरणमुत्तरम् । लब्ध्वा च केवलज्ञानं श्रयेत्स शिवमीश्वरः ॥६३॥

---

४८–गुरोरिदं गौरवं स्वरूपं १ धर्मस्येदं धार्मं स्वरूपं २ परमेश्वरस्येदं पारमेश्वरं स्वरूपं ३ एतेषु त्रिष्वपि तस्येदमित्यण् प्रत्ययः ।

५०–वादी श्रीहीरविजयसूरिः तदा प्रतिवादिनं पातिसाहिं अकब्बरमिदमवादीत् । इदमिति किं ? एतत्स्वरूपं एतेषां गुरु–धर्म–परमेश्वराणां स्वरूपं एतत्स्वरूपं तत्कर्मतापन्नम् । चः पुनः पारमेश्वरीं परमेश्वरस्य प्राप्तिं च लाभं त्वं पातिसाहे ! अकबर ! शृणु ।

५९–चक्रवर्तिसम्बन्धिनो गोलक्षस्य भक्षितेक्षुक्षेत्रस्य आदिविशेषस्य अर्धार्धक्रमेण पीतगोक्षीरस्य पर्यन्ते यावदेकस्या गोः सम्बन्धि यत्क्षीरं तदिव माधुर्यरसं आस्रवति मुञ्चतीति क्षीरास्रवं, एवंविधं वचो वचनं यस्य सः क्षीरास्रववचाः । मधुशर्करादि मधुरद्रव्यं तत् आस्रवति मध्वास्रवं एवंविधं वचो यस्य स मध्वास्रववचाः ।

दीपज्योतिरिवान्योऽन्यं सम्मिलितपृथक् स्थितः। ज्योतिरूपं चिदानन्दं धरन् भायात्स ईश्वरः

—इति परमेश्वरस्वरूपम् ।

दयासंयमसंयुक्ते तपश्चरणतोऽचिरात् । साक्षात्पुण्यात्मभिः पुंभिः प्राप्यते परमेश्वरः ॥ ६५ ॥

—इति परमेश्वरप्राप्तिः ।

वाक्यैरित्यादिभिस्तत्त्वं प्रत्यबोध्यत तेन सः । मृष्टैर्मध्वास्रवैः स्पष्टैः क्षीरास्रवघृतास्रवैः ॥६६॥
अभरत्सूरिः पाथोदस्तद्हृदयसरस्तदा । गुरुधर्मेश्वरास्तित्वज्ञानाङ्गीकारवारिणा ॥ ६७ ॥
तद्धृदयं सरोरम्यं सूरिर्मेघ इवाभरत् । गुरुधर्मेश्वरास्तित्व—ज्ञानाङ्गीकृतिभी रसैः ॥ ६८ ॥
अनेकच्छेकसूरीन्द्रसाधुश्रावकपक्षिभिः । सेव्यमानं तदा दीव्यत् तद्धर्मजललब्धये ॥ ६९ ॥
आगरानगराद् यावदजमेरपुरं पथि । मनारान् कूपिकोपेतान् प्रतिक्रोशमकारयत् ॥७०॥
स्वकीयमृगयारङ्गत्कलाकुशलतां जनान् । ज्ञापयितुं मृगानेकशृङ्गध्वजविराजितान् ॥७१॥
पापीयानीदृशोऽनेकजीवहिंसापरायणः । अभवत्स पुरा नित्यं रूपभृत्पापमेव यत् ॥ ७२ ॥

—त्रिभिर्विशेषकम् ॥

हीरविजयसूरीन्द्रसद्गुरोर्योगतोऽधुना । दयादानानगरादिसङ्गरङ्गो बभूव सः ॥ ७३ ॥
सद्गुरौ जिनधर्मे च प्रीतचेतास्ततोऽथ सः । इत्याह जगदाश्चर्यैकारणं श्रीगुरुं प्रति ॥ ७४ ॥
ग्रामान् द्रङ्गान् गजानश्वान् द्रव्याणि प्रचुराणि च । ददाम्यहं गृहाण त्वमिति, चानुगृहाण भोः॥
गुरुराह ततो—भूप, त्यक्त्वैतान् सत आलये । भिक्षे वस्तूचितं युक्तो नैतेषां संग्रहो मम ॥७६॥
धन्योऽयं निःस्पृहः सर्वसांसारिकवस्तुषु । स्वोचितं वस्तु यल्लाति, स तदेति व्यचिन्तयत् ॥
ततः पुनरिति स्वीये हृद्यालोचयति स्म सः । एतद्योग्यं गृहे मेऽस्ति पुस्तकं तद्ददाम्यहम् ॥
विचार्यैवं तदा चित्ते कृत्वा च प्रचुराग्रहम् । ददौ श्रीगुरवे दिव्यं सिद्धान्तादिकपुस्तकम् ॥
पुत्रे मित्रे कलत्रे च धनस्वजनभूघने । ग्रामे द्रङ्गे गजादौ च निरीहाय महात्मने ॥ ८० ॥

—युग्मम् ।

---

६७—तद्हृदयं तस्य पातिसाहेरकब्बरस्य हृदयमेव सरस्तद्धृदयसरः तद्धृदयं अकब्बरपातिसाहिहृदयं रसैः पानीयैरित्यर्थः ।

७०-७२—स अकब्बरपातिसाहिः आगरानगरात् अजमेरनगरं यावत् मार्गे प्रतिक्रोशं कूपिकोपेतान् मनारान् कारयित्वा स्वकीयाखेटककलाकौशल्यप्रकटनकृते प्रतिमनारं शतशो हरिणविषाणरोपणकारणादिना प्रथमतो जन्तुं जातव्याघातसंजातचेतोरतिः स भूपतिततिपतिः श्री अकब्बरपातिसाहिः हीरविजयसूरिसद्गुरोर्योगतः सम्बन्धात् अधुना दयादानानगरादिसंगरंगो बभूव ।

७५—अनुगृहाण अनुग्रहं कुरु प्रसादं कुरु इत्यर्थः ।

स स्वचित्ते विचिन्त्यैवं तदा पितरमब्रवीत् । प्रपद्ये चरणं ह्यद्यमाज्ञया भवतः खलु ॥२०॥
पितापि तं तदा प्राह प्रव्रजिष्याम्यमा त्वया । संसारापारदुःखेभ्यो भृशमुद्विग्नमानसः ॥२१॥
अपृच्छ्यत तदा ताभ्यां मुदा कोडिमदेव्यपि । आवां परिव्रजिष्यावः पितृपुत्रौ तवाज्ञया ॥२२॥
सा प्राहात्र स्थिताहं किं करिष्यामि युवां विना । युवां यथा तथाहं च प्रव्रजिष्यामि सर्वथा ॥
आलोच्यैवं पिता माता पुत्रश्चैते त्रयो मिथः । दीक्षायै प्रयतात्मानः प्रायतन्त समन्ततः ॥२४॥
तद्यथा—अनेकवरयात्राभिः क्रियमाणाभिरादरात् । श्रावकैर्नागरैर्लोकैर्दिवसे दिवसेऽधिकैः ॥
वाद्यमानैः सदातोद्यैरनवद्यैर्वाद्यवादकैः । गीयमानैर्घनैर्गीतैः कान्ताभिश्च नृभिर्बुधैः ॥ २६ ॥
अश्वारूढः कदाचिच्च गजारूढः कदाचन । नृसिंहो जयसिंहोऽसौ तदा राजत राजवत्॥२७॥
—त्रिभिर्विशेषकम् ।

शुभे मासे सिते पक्षे शोभनायां तिथौ तथा । नक्षत्रे च शुभे लग्ने शुभे योगे शुभे भृशम्॥२८
हीरविजयसूरीन्द्रो जयसिंहमदीक्षत । पित्रा मात्रा च संयुक्तं महोत्सवपुरस्सरम् ॥ युग्मम्
तदा यत्सुकृतं जातमन्यच्छीलव्रतादिजम् । द्रव्यादिव्ययजातं च तद्वक्तुं शक्नुमो नहि ॥३०॥
हीरविजयसूरीन्द्रस्तन्नामेदं तदावदत् । जयकुशलकारित्वात् जयकुशलपण्डितः ॥३१॥
( विजयाविमलानन्दाद् विजयविमलः सुधीः—इति वा पाठः )

हीरविजयसूरीन्द्रो जयसिंहश्च सत्पिता । शिष्येण गुरुणानेन सर्वदाऽत्यसुखायत ॥३२॥
सद्योऽनवद्याः सद्विद्या अपठत्स चतुर्दश । अशिक्षत च तत्कालममलाः सकलाः कलाः॥३३
सज्जनोदयसन्तोषी परःदुखनिवारकः । सत्यसाहससंशोभी सोऽभवद् वादकर्मठः ॥३४॥
दानशीलः सुधीलालः सिंहवज्जयसंश्रयः । स रराज विनीतो यो यौवनश्रीयुतस्ततः ॥३५
श्रीपण्डितपदं पूर्वं तस्मै तदनु चोत्सवात् । उपाध्यायपदं सोऽदात् सोऽभादेवं दिने दिने ॥
कियत्यपि गते काले गच्छभारधुरन्धरम् । शान्तात्मानं वरीयांसं सर्वशिष्येभ्य उत्तमम् ॥३७॥
सर्वकार्यकरं दृष्ट्वाऽभ्यषिञ्चत्तं शुभे दिने । श्रीसूरिर्युवराज्यत्व आचार्यपदनामके ॥ युग्मम् ॥
श्रेष्ठी मूलाभिधोऽकार्षीत् श्रेष्ठसूरिपदोत्सवम् । न चेदृशं पुराकार्षुः सूरीणां भक्तिना जनाः ॥
यावन्तो मिलितास्तत्र जना नवनवा घनाः । तावन्तो भोजयत्तांश्च कुण्डलीभिर्यथेप्सितम् ॥

---

३२—हीरविजयसूरीन्द्रः शिष्येन जयसिंहनाम्ना करणभूतेन सर्वदा अत्यसुखायत अतिशयेन सुखं वेदयतिस्म । यन्ममायं शिष्यः पट्टयोग्यो भविष्यतीत्यतिसुखमवेदयदिति भावः । चः समुच्चये । जयसिंहः शिष्यः अनेन गुरुणा श्रीहीरविजयसूरीन्द्रेण करणभूतेन सर्वदा अत्यसुखायत आतिशयेन सुखं वेदयति स्म । धन्यो यदस्य शिष्योऽभवामिति आतिसुखमवेदयदित्यभिप्रायः । कथंभूतो जयसिंहः सत्पिता प्रधानपितृकः पितृयुक्त इत्यर्थः । सुखादिभ्यः कर्तृवेदनायामिति क्यङ् ।

प्रादात्तेभ्यश्च सद्वर्ण्याः सौवर्णाङ्गुलिमुद्रिकाः । श्रीमत्यहम्मदावादे सर्वत्रावर्ततोत्सवः ॥४१॥
—त्रिभिर्विशेषकम् ॥

श्रीरङ्गे पत्तनद्रङ्गे यस्य पट्टनन्दनोत्सवम् । अधिकं श्रावकोऽकार्षीत् पूर्वपदवन्दनोत्सवात् ॥४२॥

एवं सूरिवरस्य हीरविजयाख्यस्य प्रशस्ये पदे,
दीप्तं तं विजयादिसेनसुगुरुं सर्वात्मना निर्मलम् ।
श्रीमान वासकुमार एष उदयी पर्यक्षताचारतः,
श्रीश्रीवल्लभपाठकश्च यमिति व्याख्यातवान् सद्गुणैः ॥४३॥

इति श्री बृहत्खरतरगच्छीय श्रजिनराजसूरि सन्तानीय पाठक श्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराजपातिसाहि श्रीअकब्बर प्रदत्तजगद्गुरु-विरुद-धारकभट्टारक श्रीहीरविजयसूरीश्वर पट्टालङ्कार पातिसाहि श्रीअकब्बरसभासंलब्ध दुर्वादिजय-वादभट्टारक श्रीविजयसेनसूरीश्वर पट्टपूर्वाचलसहस्रकरानुकारि पातिसाहि श्रीयहांगीर प्रदत्त-महातपाविरुदधारि भट्टारक श्रीविजयदेवसूरीश्वर गुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्य-नाम्नि महाकाव्ये श्रीविजदेवसूरि गुरुवर्णनपरीक्षणो नाम चतुर्थः सर्गः ॥ ४ ॥

# पञ्चमः सर्गः

अथ श्र्यहम्मदावादे स्थिरः श्रेष्ठी समाययौ । पुत्रस्य स्वस्य पत्न्याश्च दीक्षाग्राहणहेतवे ॥१॥
गृहे गृहिण एकस्य यावद्वसनभाटकम् । दत्त्वा तत्रावसद्वश्यः पुण्यात्मा पुरुषोत्तमः ॥२॥
अथारेमे ततः श्रेष्ठी दीक्षायाः सन्महोत्सवम् । श्रीमद्वासकुमाराख्य–पुत्रस्य स्वस्य च स्त्रियः॥

तद्यथा—व्यचित्रयद्विचित्राणि चित्राणि वरवर्णकैः ।
गृहभित्तीः सुच्छित्तीः कविः काव्यततीरिव ॥ ४ ॥

गृहस्य प्राङ्गणं प्राभात् स्वतिकाब्जादिमण्डनैः । मण्डितं पण्डितस्त्रीभिस्तदा चित्रितवस्तुव ॥
चन्द्रोदयचयो यत्र प्रतिस्थानं नियन्त्रितः । चन्द्रोदय इव प्रायो मनोहरन्मनोहरः ॥६॥
बद्धमुच्चैः क्वचित्तत्र स्थूलं स्थूलं व्यलीलसत् । शृङ्गारमिव रोदस्योः प्रालम्बनकसंततम् ॥७॥
यत्र हाजापटेलस्य प्रतोली बहुलालया । अस्ति, सन्ति हि यस्यां च सकला बहुलालयाः।८।
मण्डपं मण्डयामास दीक्षायास्तत्र सुन्दरम् । पञ्चवर्णमयैर्वस्त्रैश्चित्रकृद्भिर्विचित्रितैः ॥ युग्मम् ॥
मुखमल्ला बभुर्यत्र मुखमल्ला बुधा इव । वाणीवर्णविशेषाणां रचनाभिर्नृरञ्जकाः ॥ १० ॥
जरबाफादयः क्वापि विशेषा वाससामिमे । बभुर्नेत्रप्रिया यत्र नानाविच्छित्तिनिर्मिताः ॥११॥
आयाताः सूर्यचन्द्राद्याः ग्रहा इव सुविग्रहाः । तन्मिषात्तन्मुखं द्रष्टुं नानासंस्थानसंस्थिताः ॥
द्वारं तस्य विभाति स्म रम्भास्तम्भविशोभितम् । सुखानां कौतुकानां च संकेत इव रूपवान् ।
खं भुवं चान्तरायश्च विमानमिदमीदृशम् । द्यावाभूम्योर्विदूरस्थं पुंस्त्रीदेवादियुग् व्यभात् ॥
आदर्शी रचना यत्र कुत्रचित्प्रीतिकारिणी । तदा श्रेणिरभूत्पुंसां दृष्टान्तानां परस्परम् ।१५।
आदर्शी रचना यत्र कुत्रचित्सर्वतस्तदा । प्रतिबिम्बेन लोकानां वक्तीव किमु तद्गुणान् ।१६।
क्वाप्यत्र स्वस्तिकादीनि मौक्तिकैर्ग्रथितानि हि । प्रालम्बनकभास्वन्ति मोहयन्ति स्म मानवान्॥
पण्डितानक्षराणीव लिखितानि खटीरसैः । मात्राबिन्दुप्रदीप्तानि प्रकटान्युज्ज्वलानि च ॥
—युग्मम् । इति दीक्षामण्डपवर्णनम् ॥
आकारयत्स आराममभिराममनिन्दितम् । पुत्रस्य वरयात्रायै नानाकृत्रिमवृक्षकैः ॥ १९ ॥

---

११–अत्र विच्छित्तिः रचना विशेषः–कुत्रचित् जन्तुरूपाणि, कचित् पद्मानि, कचित् पुष्पाणि, कचित् सूर्यचन्द्रतारकाकारा इत्यादिलक्षणः ।

१२–नानासंस्थानसंस्थिताः–नाना बहु प्रकारं संस्थानं रचना स्वस्वाकारस्वरूपा रचना तेन संस्थिताः समन्ततः स्थिता ये ते तथा । तन्मिषात् जरबाफादिमिषात् । तन्मुखं श्रीवासकुमारमुखम् ।

तत्राग्रे सहकारः प्राक् हकारेकारयुग् भवन् । लोकोक्तां सुनृतां वार्तां ज्ञात्वा निरचिनोदिति ॥
श्रीमान् वासकुमारोऽयं प्रविव्रजिषताम्वरः । सूरिः सूरिस्ततो भावी पूर्वजेभ्योऽधिकद्युतिः ॥
नीलकौशेयसंशोभिपत्रश्रेणिविराजिताः । यत्र रम्भा बभुः स्वर्णमूला इन्द्रध्वजा इव ॥ २२ ॥
फलिताः शाखिनो यत्र बहुधैवं विरेजिरे । कर्तारो दिव्यसस्यानि भर्तारः सर्वसम्पदः ॥२३॥
केतकी-यूथिका-जाति-जपा-[illegible]श्च यः । पृथक्रूपान् पृथक्वर्णान् पुष्पवृक्षानकारयत् ॥
एवं दीक्षासुसामग्रीक्रीडाश्चातोद्यजातयः । मोदकाद्यानि खाद्यानि निरपद्यन्त तद्गृहे ॥२५॥
सोऽक्षिपद् वर्णके पुत्रं शुभेऽह्नि कविवन्नृपम् । कौसुम्भवस्त्रसंयुक्तः प्रातर्बालार्कवत्तदा ॥२६॥
सख्योऽभिगायतोल्लूलन् संवर्धयत मौक्तिकैः । श्रेष्ठिनः श्रीस्थिराकस्य पुत्रः परिव्रजत्ययम् ॥
आचख्युरिति गायन्त्यः काश्चित्काश्चित्सखीः प्रति ।
कार्याण्यन्यानि सन्त्यज्य त्वरध्वं तं प्रतीक्षितुम् ॥२८॥ युग्मम् ॥
चारुक[illegible]कुङ्कुमादिविमिश्रितम् । स्फुरत्परिमलोपेतां शिष्टां कुरुत पिष्टिकाम् ॥२९॥
दीव्यगन्धोदकैरुष्णैः सम्यक् स्नपयत द्रुतम् । दृष्टिदोषाच्च रक्षायै यतध्वं द्वन्द्ववर्जिताः ॥३०॥
गन्धकारिस्त्वतस्तस्य फुल्लमालादिगर्भितम् । न्यबध्नन् मूर्ध्नि धम्मिल्लं वक्रं ग्रीवेव वाजिनः ॥
विलिप्तदीव्यदेहश्रीर्बभौ केशवमूर्तिवत् । कर्पूरागरुकस्तूरीमिश्रचन्दनकुङ्कुमैः ॥ ३२ ॥
स सर्वाङ्गेषु संयुक्तो मुक्ताभिः कान्तकान्तिभिः । बभौ चन्द्रार्कताराभिराकाश इव निर्मलः ॥
आनाभिलम्बितान् मुक्ताहारांस्तारान् स पर्यधात् । लावण्यनीरधेः पीनफेनबुद्बुदसन्निभान् ॥
चोलोष्णोषादिवस्त्राणि देवदूष्योपमानि च । पर्यधात्स ततः काये सौवर्णाभरणानि च ॥३५॥
अदीप्यत तदानीं स पुष्पितः फलितोऽपि च । विधाता वाञ्छितार्थानां कल्पवृक्ष इवाङ्गवान् ।
स वरो वरयात्रासु राजेव विरराज हि । ग्रहणैर्मुकुटोत्तंसैश्छत्रैश्च सह चामरैः ॥ ३७ ॥

---

२०—तत्र आरामे प्राक् पूर्वं सहकारः इति लोकोक्तां सूनृतां वार्तां ज्ञात्वा निरचिनोत् निश्चयं चकार । किं कुर्वन् सन् हकारेकारयुग् भवन् । हकारे ह इत्यक्षरे यः ईकारः चतुर्थस्वरः सहकारेकारः । तेन युनक्ति यः स हकारेकारयुग्, हकाराक्षरचतुर्थस्वरयुक्तो भवन् जायमानः सहीकार इत्यर्थः । इतीति किं तदाह—

२३—करणशीलाः कर्तारः भरणशीला भर्तारः—अत्र उभयत्र तृन इति तच्छीलेऽर्थे तृन् प्रत्ययः। दिव्यसस्यानि संपदः इत्युभयत्र न लोकाव्ययनिष्ठाखलर्थतृनामिति षष्ठीनिषेधात् नपुंसकस्त्रीलिंगाद्वितीयाबहुवचनम् ।

३५—चोलः आङण इति लोकाभाषाप्रसिद्धः । चुलपरिवेष्टने सौत्रः । चुल्यतेऽनेन चोलः आप्रपदीनं कञ्चुकं इति क्षीरस्वामिव्याख्यानात् । उष्णीषः पाघडी इतिभाषा । उष्णीषो मूर्द्धवेष्टनमिति हैमः ।

स जग्राहाग्रहात्पुस्तं तस्यानुग्रहहेतवे । नीरागोऽपि निरीहोऽपि धर्मलाभाय भूयसे ॥८१॥
ततः सूरिः समादाय तदा तच्छस्तपुस्तकम् । आगरानगरेऽमुञ्चच्छास्त्रकोशतयालयात् ॥८२॥
साधिकप्रहरं यावत्तत्रैकत्रोपावेश्य च । गोष्ठीं धर्मस्य तौ कृत्वा मिथस्तुतुषतुस्तराम् ॥ ८३॥
श्रीसाहिसमनुज्ञातस्ततः सूरिः समाययौ । उपाश्रये सहानेकलोकैराडम्बरोत्सवैः ॥ ८४ ॥
ततश्च सकले लोके जज्ञे प्रवचनोन्नतिः । यत्स्यात्स्फातिमदानन्दि सतां चानुपदं महः ॥८५॥
तस्मिन्वर्षे चतुर्मासीकरणानन्तरं मुदा । आगरानगरात्सोरीपुरेऽगात् सूरिरुत्तमः ॥८६॥
नेमिनाथजिनेन्द्रस्य यात्रया तत्र पूतया । साधुश्राद्धैः सहानेकैः पवित्रात्माथ सोऽभवत् ॥८७॥
तत्र श्रीनेमिनाथस्य प्रतिमाद्वितयं तदा । तत्कालनिर्मितश्रीमन्नेम्यर्हत्पादुकायुतम् ॥८८॥
प्रत्यतिष्ठत स सूरिश्च श्रेष्ठो ज्येष्ठप्रतिष्ठया । श्रीसङ्घविहितानन्तगीतमानादिकोत्सवैः ॥
आगरानगरे स्वर्णटङ्कादिव्ययतस्ततः । न कदापि पुरैतादृग्जाताज्जाग्रन्महोत्सवात् ॥९०॥
श्रीमानसिंह-कल्याणमल्लकारितमद्भुतम् । स चिन्तामणिपार्श्वादेः प्रत्यस्थात्प्रतिमोच्चयम् ॥९१॥
प्रादुरासीत्ततस्तत्र तत्तीर्थं भुवि विश्रुतम् । जाग्रत्प्रभावं सर्वेषां मनोवाञ्छितदानतः ॥९२॥
ततः पुनरपि श्रीमत्फत्तेपुरपुरे वरे । समागत्यामीलत्प्रीत्या साहिना सह सद्गुरुः ॥९३॥
तस्मिन्नवसरे यावदेकप्रहरमादरात् । धर्मवार्तां विधायैवं श्रीसाहिस्तमभाषत ॥९४॥
द्रष्टुं त्वद्वदनाम्भोजमत्युत्कण्ठितमानसः । दूरदेशात् समाहूय जातोऽहं धर्मतत्परः ॥९५॥
यन्मदीयं प्रदत्तं न गृह्णासि किमपि प्रभो । मच्छकाशाच्च तेन त्वमुचितं प्रार्थयाधुना ॥९६॥
सुकृतार्थः कृतार्थश्च भवानिव भवानि व । सर्वथा न वृथा सूरे यतस्वात्र यथा तथा ॥९७॥

---

८५—अत्र स्फातिरयं शब्दः दन्त्यपवर्गाद्वितीयाद्वितीयस्वरादिः स्फायैङ् वृद्धौ भ्वादिरात्मनेपदी । अस्मात् स्फायः स्फी वा इति सूत्रेण क्तयोः परतः स्फी इत्ययं दन्त्यपवर्गाद्वितीयचतुर्थस्वरोपेत आदेशो विकल्पेन भवेत् । स्त्रियां क्तिरिति क्तिप्रत्यये तु निषेधस्तेन द्वितीयस्वरादिरेव । अथ स्फातिर्वृद्धौ इति हेमकोशे ।

९०-९१—ततः श्री सोरीपुरे श्री नेमिनाथतीर्थङ्करस्य यात्रा नवीनप्रतिमा—पादुकानां प्रतिष्ठाकरणात् । स श्री हीरविजयसूरिः श्रीचिन्तामणिपार्श्वादेः प्रतिमोच्चयं प्रतिमासमूहं प्रत्यस्थात् प्रत्यतिष्ठत इत्यर्थः। कस्मात् ? जाग्रन्महोत्सवात् । कथं भूतात् पुरा पूर्वं कदापि न एतादृग् जातात् तादृग् जात इतीदं सुपेति समासत्वात् समासान्तमेकपदम् । कस्माज्जाग्रन्महोत्सवात् स्वर्णटङ्कादिव्ययतः स्वर्णटङ्कादिव्ययः तस्मात् ।

९७—हे सूरे यथा येन प्रकारेण भवानिव भवद्वत् सुकृतार्थः सुकृतं पुण्यमेवार्थः प्रयोजनं यस्य स तथा । चः समुच्चये कृतार्थः कृतः सर्वप्रयोजनो भवानि व तथा तेन प्रकारेण यतस्व यतनं कुरु । अत्र अस्मिन् वाक्ये अस्यां विज्ञप्तौ सर्वथा सर्वैः प्रकारैर्न वृथा न कृत-

ततः सूरीश्वरश्चित्ते विचिन्त्यैवं तमब्रवीत् । सर्वविश्वम्भराधीशशिरश्चूडामणीयितम् ॥९८॥
विश्वम्भरायां सर्वेषु तव देशेषु सर्वदा । श्रीमत्पर्युषणापर्वाष्टाह्निकायां महीपते ॥९९॥
प्रवर्तनममारेश्च बन्दिलोकस्य मोचनम् । विधेहीति ततः साहिरिति चित्ते चमत्कृतः ॥१००॥
अहो निर्लोभतैतस्य शान्तता च दयालुता । अकिञ्चनोऽपि किञ्चिन्न मामयाचीद् धनादि यत् ॥
श्रीसाहिराह चत्वारो दिवसा अधिका मम । उपरिष्टात्त्वदुक्तस्य भवन्तु सुकृतश्रियै ॥१०२॥
इत्थं सद्य इति प्रोच्य साहिरुत्साहपूरितः । द्वादशदिवसामारि-फुरमानानि षट् तदा ॥१०३॥
काञ्चनरचनायुञ्जि स्वीयनामाङ्कितानि च । त्वरितं लेखयित्वैव प्रददौ सद्गुरोः करे ॥१०४॥
स्वीयसाधितदेशेषु सर्वेषु वसुधातले । श्रावणवदिपक्षस्य प्रारभ्य दशमीदिनात् ॥१०५॥
मासि भाद्रपदे शुक्लषष्ठीं यावन्न कश्चन । जीवव्यापादनं कुर्यादिति तेषु व्यलेखयत् ॥१०६॥
एषां व्यक्तिं पुनश्चैवं शृण्वन्तु श्रावका इमाम् । पूर्वं गूर्जरदेशस्य, द्वितीयं मालवस्य हि ॥१०७॥
तृतीयमजमेरस्य, फुरमानं मनोहरम् । दिल्लीफत्तेपुराख्यस्य, देशस्य तु चतुर्थकम् ॥१०८॥
लाहोरमुलतानाख्यदेशस्य खलु पञ्चमम् । एतानि पञ्चदेशेषु, पञ्चसु प्रेषणाय हि ॥१०९॥
देशपञ्चकसम्बन्धि षष्ठं श्रेष्ठावलोकनम् । सकाशे सूरिराजस्य रक्षणाय चिराय हि ॥११०॥
—चतुर्भिः कलापकम् ।

तत्तद्देशेषु पञ्चानां तेषां द्राक् प्रेषणेन च । अमारिपटहोद्घोषमेघोऽवर्षत्तरां वरः ॥१११॥
अज्ञायमाननामातः कृपावल्ली महीतले । आर्यानार्यकुलोल्लासिमण्डपेष्वैधताचिरात् ॥
मोचनं बन्दिजन्तूनामङ्गीकृत्य गुरूदितम् । श्रीसाहिः सूरिराजस्य पार्श्वादुत्थाय हर्षतः ॥
तदैवानेकगव्यूतमिते डम्बरनामके । महासरसि गत्वात्मशस्तहस्तेन धर्मधीः ॥११४॥
देशान्तरीयसल्लोक ढौकितान् पक्षिणो घनान् । कारागारस्थलोकांश्च मुमोच वचने दृढः ॥११५॥
—त्रिभिर्विशेषकम् ।

एवं चानेकशः श्रीमत्साहेर्मिलनतो गुरुः । चैत्योपाश्रयरक्षायै फुरमानान्यकारयत् ॥११६॥
तेषां विधापनादासीत्प्रवचनप्रभावना । तदुत्पन्नश्च यो लाभः स्तोतुं शक्नोति तं च कः ॥११७॥
तस्मिन् क्षणे सदारङ्गश्राद्धस्तद्गुणरञ्जितः । मेडतीयो ददौ दानमीदृशं यस्य दर्शनात् ॥११८॥
द्विपञ्चाशत्तुरङ्गान् सन्मूर्तिमद्धस्तिनं नवम् । वस्त्रप्रभृतिवस्तूनि बहूनि बहुशो ददौ ॥११९॥
दिल्लीदेशे समस्तानां श्राद्धानां श्रद्धयान्वितः । द्विसेरप्रमितां खण्डलम्भनीं च गृहं प्रति ॥१२०॥
दिव्यावदाताः श्रीसूरेरीदृशाः सन्त्यनेकधा । ग्रन्थविस्तरभीत्या तान् नेहावोचं यतोऽलसः ॥

---

मित्यर्थः । अत्र चकारोऽव्ययं पादपूरणे, अव्ययानामनेकार्थत्वात् । यथा भवान् सुकृतार्थः पुण्यार्थी मां प्रतिबोध्य कृतार्थः तथा अहमपि भवदुचितं भवन्मार्गितं कृत्वा सुकृतार्थः कृतार्थश्च भवानीत्याभिप्रायः ।

एवं सूरिवरस्स हीरविजयो दिव्यावदातान् घनान्,
चक्रे यान् जगतीतलेऽत्र विमलान् संस्तूयमानान् बुधैः ।
तान् शक्नोति न वाक्पतिः कथयितुं शक्तः कथं स्यां ततो,
यं श्रीवासकुमार इत्यवितथं पर्यैक्षतोग्रक्रियम् ॥१२२॥
इत्थं वासकुमार एष सुगुरोर्यादृक् परीक्षां व्यधात्,
श्रीश्रीवल्लभपाठकः समपठत् तां पण्डितैः संस्तुताम् ।
श्रुत्वा तां च तथैव तत्र भविकाः सम्यक् यतध्वं सदा,
सेवध्वं च विबुध्य तां च खलु तं त्यक्त्वा प्रमादं मुदा ॥१२५॥

इति श्री बृहत्खरतरगच्छीय श्रीजिनराजसूरि सन्तानीय पाठक श्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराजपातिसाहि श्रीअकब्बर प्रदत्तजगद्गुरु-बिरुद-धारक भट्टारक श्रीहीरविजयसूरीश्वर पट्टालङ्कार पातिसाहि श्रीअकब्बरसभासंलब्ध दुर्वादिजय-वादभट्टारक श्रीविजयसेनसूरीश्वर पट्टपूर्वाचलसहस्रकरानुकारि पातिसाहि श्रीयहांगीर प्रदत्त-महातपाबिरुदधारि भट्टारक श्रीविजयदेवसूरीश्वर गुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्य नाम्नि महाकाव्ये श्रीविजयदेवसूरि गुरुवर्णनपरीक्षणो नाम तृतीयः सर्गः ॥ ३ ॥

१२२—स हीरविजयः सूरिवरः, एवं पूर्वोक्तप्रकारेण यान् घनान् दिव्यावदातान् अत्र जगतीतले चक्रे तान् दिव्यावदातान् कथयितुं वाक्पतिर्बृहस्पतिर्न शक्नोति, ततस्तस्मात्कार-णात् अहं कथं केन प्रकारेण शक्तः स्यां भवेयम् ? अपि तु न स्यामित्यर्थः । स कः ? यं श्री हीरविजयसूरिं श्रीवासकुमार इति पूर्वोक्तप्रकारमवितथं सत्यं उग्रक्रियं पर्यैक्षत परीक्षितवान् । शेषं स्पष्टम् ।

१२३—उत्तरार्धस्य व्याख्या—तां परीक्षां श्रुत्वा तथैव तेन प्रकारेणैव श्रीवासकुमार-कृतसद्गुरुपरीक्षाप्रकारेणैव तत्र सद्गुरुपरीक्षायां भो भविकाः सम्यक् सदा यतध्वम् चोऽन्वा-चये तां सद्गुरुपरीक्षां विबुध्य ज्ञात्वा सद्गुरुं सेवध्वं । अत्रापि चोऽन्वाचये ।

# चतुर्थः सर्गः

अथेष्टे जगतामिष्टः पट्ट एकोनषष्टके। विजयसेन आचार्यस्तस्य शिष्यशिरोमणिः ॥१॥
अस्य शृणुत वृतान्तमुत्पत्त्यादिसमुद्भवम्। यादृगस्ति श्रुतं तादृग् वक्तुमिच्छामि तत् किल॥२॥
अस्त्यस्मिन् भरतक्षेत्रे, नडुलाई पुरी वरा। ( पाठान्तरेण–पुरी श्री नारदाभिधा )
तत्र कर्म्माभिधः श्रेष्ठी वसति व्यावहारिकः ॥ ३ ॥
तत्रान्येऽपि महीयांसो भूयांसो व्यवहारिणः। सन्ति तेष्वभवत्तस्य माहात्म्यमधिकं भुवि ॥
तत्रत्यश्च महीनाथस्तं सदाद्रियतेतराम्। वहन्ति च तदुक्ताज्ञां शिरस्युष्णीषवज्जनाः ॥५॥
दिव्या कोडिमदेव्याख्या देव्याख्यातास्तिरूपतः। तस्य पत्नी सपत्नीव लक्ष्म्या लक्ष्मीसमन्विता॥
कला रूपं गुणाः सर्वे यौवनं बहुसम्पदः। तं सदा सुखयामासुस्तस्या लाभेन पुण्यतः ॥७॥
जयसिंहाह्वयः पुत्रस्तयोरासीज्जयोदयः। जयाधिकशिरोरत्नं जयसिंहपराक्रमः ॥८॥
सर्वदा लोकसन्तापी बुधतेजोपहारकः। अस्थैर्यभाजनं नित्यं सूर्यस्तेन कथं समः ॥९॥
सदा दोषोदयः शुक्लैकपक्षः खण्डनान्वितः। कलङ्कालंकृताङ्गश्च सोमस्तेन कथं समः ॥१०॥
निर्जरैर्मथितो बद्धोऽम्भोमयो भूबहिकृतः। हृतरत्नः समुद्रोपि कथं तेन समो भवेत् ॥११॥
परोपकारहीनश्रीरहृदयः कठिनाकृतिः। गुणैर्मेरुगिरिस्तेन सदृशो हि कथं भवेत् ॥१२॥
आदित्यादपि तेजस्वी यश्चन्द्रादपि सौम्यवान्। सागरादपि गम्भीरो मेरोरपि गुणैर्गुरुः ॥१३॥
सर्वदा पितृपादाब्जसेवाहेवाभवन्मनाः। सद्वृतौ बद्धकक्षो यो राजहंस इवाबभौ ॥ १४ ॥
—जयसिंहकुमारवर्णनम्।

अस्मिन्नवसरे तस्य वैराग्यमभवद् हृदि। बाल्येऽपि वयसि स्पष्टं कस्माच्चिदपि कारणात् ॥
आधिव्याधिजरादुःखदौर्गत्यादिककारणम्। असार एष संसारो नात्राऽतः स्थितिरद्भुता ॥
अस्मिन् ये न्यवसन्पूर्वं निवसन्ति च ये पुनः। निवत्स्यन्ति च ये लोका दुःखिनो विषयैषिणः॥
दौर्गत्यादिकभाजस्ते भविष्यन्ति भवे भवे। तं त्यक्षन्ति भविष्यन्ति ते सिद्धा उत देवताः ॥१८॥
अतो गृह्णाति चारित्रं तप्यैव तप उत्कटम्। लभै स्वर्गादिसौख्यानि तप्यैव जगतीतले ॥१९॥

---

७–तं कर्माभिधम्, तस्याः कोडिमदेव्याः।

८–जये सिंहस्य पराक्रम इव पराक्रमो यस्य स तथा। ९–तेन जयसिंहाभिधेन।

१९–तपेस्तपः कर्मकादिति कर्तरि आत्मने पदे कये च आशिषि लोट उत्तमपुरुषैकवचनं प्रथमोऽयम्। तपिं च ऐश्वर्ये दिवादिरात्मनेपदी, तपं धूपसन्तापे भ्वादिरित्यस्यैव ऐश्वर्येऽर्थे दिवादित्वं आत्मने पदं वा विधीयते। अन्ये तु तपिं च ऐश्वर्ये इति धात्वन्तरं दिवादिमाहुः। अन्ये तु भ्वादेरेव ऐश्वर्ये सन्तापे च आत्मने पदं वेच्छन्ति। लोट उत्तमपुरुषैकवचनं द्वितीयोऽयम्।

वाद्यान्यवादयन् केऽपि केऽप्यगायन् सुगायकाः । ननृतुर्नर्तकाःकेऽपि केऽप्याख्यन् कथकाः कथाः॥
नेजव्याजविमानस्थकरकाकारदम्भतः । तमीक्षितुमिवायाता ज्ञ-जीव-कविदेवताः ॥ ३९ ॥
यस्यैवं वरयात्रासु बभूवुः सन्महोत्सवाः ।
इन्द्रः स्तोतुं न यान् शक्तः तान् व्याख्यान्ति कथं बुधाः ॥४०॥ त्रिभिर्विशेषकम् ॥
अत्यद्भुतानि वासांसि देवदूष्योपमान्यथ । कुमारः पर्यधाद् वयस्तदा दीक्षामहोत्सवे ॥४१॥
प्रालम्बनकसंशोभिस्वर्णमाणिक्यनिर्मितम् । न्यबध्नान्मुकुटं भाले पर्यधाद् ग्रहणानि च ॥४२॥
शिबिकां स समारोहत् निर्मितामिव दैवतैः । जाग्रत्पुण्यवतां योग्यां वर्धमानकुमारवत् ॥४३॥
गायनैर्गीयमानेषु गीतेषु प्रीतमानसैः । वाद्येषु वाद्यमानेषु हृद्यैरातोद्यवादकैः ॥ ४४ ॥
विद्वद्भिर्बन्दिभिर्मोदात् स्तूयमानगुणोदयः । विज्ञातविविधानेकमङ्गलातोद्यसद्यशाः ॥ ४५ ॥
नीरङ्गीरङ्गदास्यस्त्रीगीयमानसुमङ्गलः । उत्तार्यमाणलवणः पार्श्वयोर्भगिनीजनैः ॥ ४६ ॥
श्रीमद्दूहाजापटेलस्य प्रतोल्यां बहुलौकसि । मण्डितं मण्डपं पूर्वं यत्र तत्र ततोऽभ्यगात् ॥
—चतुर्भिर्विशेषकम् ॥
मुकुटादीनि दिव्यानि ग्रहणानि स्वकायतः । स उत्तार्य व्रतोच्चारं कर्तुमायाद्गुरोः पुरः ॥४८॥
विजयसेनसूरीन्द्रः कृत्वा नन्दिं तदाद्भुताम् । चतुर्भिः संयुतां देवैर्वेदीं वैवाहिकीमिव ॥४९॥
ततस्तं मातृसंयुक्तं दीक्षाकन्यां व्यवाहयत् । कारयित्वा तदा तस्यां वारत्रयं प्रदक्षिणाः ॥५०॥
रूप्याणि नालिकेराणि वस्त्रादीनि च लक्षशः । श्रीसङ्घोऽहम्मदावादे प्रादाल्लाकेभ्य उत्सवे ॥
षोडशस्य शतस्यास्मिन् त्रिचत्वारिंशवत्सरे । दशम्यां माघशुक्लस्य दीक्षाभूद्यस्य सोऽव्रतात्॥
विद्याविजय इत्याख्यां तस्य सूरिस्तदाऽकरोत् । सद्विद्याविजयास्तित्वात् त्रिकालज्ञो गुरुर्यतः ॥

एवं वासकुमार एष जननीयुक्तः स उल्लासतः,
प्राव्राजीत् विषयान् विहाय सकलान् सांसारिकान् सर्वदा ।
श्री श्रीवल्लभ एष पाठक इमं यस्यात्र दीक्षोत्सवं,
सर्वेषां श्रुतमात्रकर्णसुखदं सर्वेमियं व्याकरोत् ॥ ५४ ॥

इति श्री वल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराज पातिशाहि श्रीअकब्बरप्रदत्त जगद्गुरु बिरुदधारक भट्टारक श्रीहीरविजयसूरीश्वर श्रीयहांगीर प्रदत्तमहातपाबिरुदधारि-भट्टारक श्रीविजयदेवसूरीश्वर गुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजय-देवसूरि दीक्षोत्सववर्णनो नाम पञ्चमः सर्गः सम्पूर्णः ॥५॥ लिखितं मुनि सोमगणिना ॥

---

३९—करकाकारदम्भत इत्यत्र करकशब्दो लोटीपर्यायः । कर्करी करकः लोटा वर्द्धनी च गलन्तिका—इति हलायुधः ।

४४—आतोद्यवादकैः वाजदार इति भाषाप्रसिद्धैः ।

५१—उत्सवे दीक्षामहोत्सवे ।

# षष्ठः सर्गः

अथो विजयसेनाख्यो वर्याचार्योऽभ्यमन्यत । श्रीमान् वासकुमारोऽपि मिथोऽद्यसुकृतार्थताम् ॥
अधीयानं गुरोः पार्श्वेऽकुर्वाणं पर्युपासनाम् । आश्रवोऽयं विधेयोऽयमित्यवादीत्तदा गुरुः ॥
गुरुहस्तप्रभावेन दीप्यते वर्धते च सः । गुरुः शिष्यप्रभावेनैधतैवं चाप्यऽदीप्यते ॥ ३ ॥

तद्यथा—कियत्यपि गते काले, लेभे सूरिपदं ततः ।
निःसपत्नं स साम्राज्यमिवोग्राऽग्राज्ञयाऽन्वितम् ॥ ४ ॥

विजयसेनसूरीन्द्र इति नामाऽभवद्भुवि । विख्यातं श्रीगुरुख्यातं सन्मुखात्पारमेश्वरात् ॥५॥
ततः कुर्वन् महीपीठे धर्म्मराज्यं विशेषतः । अधिकाधिकतेजास्स भवन् प्रावर्ततांचिरात् ॥
श्रीमतोऽकब्बराख्यस्य पातिसाहेः सुसंसदि । षड्दर्शनानुसम्बन्धि वार्ता प्रावर्ततान्यदा ॥
तदा च कोविदः कश्चित् पातिसाहिं न्यवेदयत् । पञ्चदर्शनविद्वांसस्तिष्ठन्ति भवतोऽग्रतः ॥
हीरविजयसूरीन्द्रशिष्यः षष्ठोऽस्ति वादिपः । विजयसेनसूरीन्द्रः स त्वत्तोऽन्यत्र तिष्ठति ॥९॥
मनुते स च नो गङ्गां रामं च परमेश्वरम् । इत्यादिभिर्वचोभिस्स तं चेति प्रत्यबोधयत्॥१०॥
पातिसाहिस्ततोऽत्यन्तं तमाह्वातुं समुत्सुकः । अलेखयत्तदाहूत्यै स्फुरन्मानं घनादरम् ॥११॥
स्वसेवककरे दत्वा स्फुरन्मानं तदा मुदा । त्वमानयमाहूयेत्यऽवदत् सेवकं हि सः ॥१२॥
स तदा शिरसि न्यस्य स्फुरन्मानं तदाज्ञया । प्रस्थाय राधनपुरे सूरेः पार्श्वं समाययौ ॥१३॥

—प्रस्थाय राजधन्याख्यपुरे पार्श्वं गुरोर्ययौ—इति पाठान्तरम् ॥

श्रीसूरीश्वरमानम्य तदालोकनतस्तदा । रोमाञ्चिततनुः प्रादात् स्फुरन्मानं स तत्करे ॥१४॥
श्रीसङ्घस्य समक्षं स स्फुरन्मानमवाचयत् । वाचं वाचं गुरोश्चित्तं सङ्घश्च मुमुदेतराम् ॥१५॥
सेवकं पातिसाहेश्च श्रीसङ्घो मोदयत्तराम् । जीवितार्हस्वदानाच्च मृष्ट[illegible]भोजनात् ॥१६॥
प्रातिष्ठत ततः सूरिः सुमुहूर्तं शुभे दिने । श्रीमन्तं सङ्घमापृच्छ्य सुधी-साधुसमन्वितः ॥१७॥

आद्यो नयविजयाख्यः १ श्रीमेघविजयो २ ऽपरः ।
श्रीमेरुविजयो ३ विद्वान्, श्रीनन्दिविजयः ४ कविः ॥१८॥

---

२—आश्रवो वचने स्थित इति कथनकारीत्यर्थः । विधेयो विनयग्राही इत्यमरः ।

५—श्रीगुरुणा श्रीहीरविजयसूरीन्द्रेण ख्यातं कथितं श्रीगुरुख्यातम् । कस्मात् सन्मुखात् प्रधानवदनात्, कथंभूतात् सन्मुखात्, अत एव पारमेश्वरात्—परमेश्वरस्य इदं पारमेश्वरं तस्ये-दमित्यण् । पारमेश्वरमिव पारमेश्वरं उत्प्रेक्ष्यते; परमेश्वरमुखमिवेत्यर्थः, तस्मात् ।

१३—राजधन्याख्यपुरे रायधणपुरे इत्यर्थः ।

विद्याविजय ५ इत्यादि-विनेयैर्विनयोद्यतैः ।
प्रज्ञया गुरु १-शुक्र २-श्री ३रिव संसेवितः सदा ॥१९॥ त्रिभिर्विशेषकम् ॥
ये ग्रामा ये च सद्द्रङ्गास्तान् सिञ्चन् धर्मधारया । भञ्जन् दुरितदुष्कालं प्रमोदं प्रापयन् जनान् ॥
श्रीसूरिनीरदो गर्जन् प्रापानुक्रमतोऽचिरात् । श्रीमल्लाभपुरद्रङ्गं पातिसाहिविराजितम् ॥२१॥
सङ्घस्तत्रत्य आहत्य प्रणत्य च ततो गुरुम् । कृत्वा महोत्सवं दिव्यमुपाश्रये समानयत् ॥२२॥
अकब्बरं पातिसाहिं दिने दिव्ये ततोऽमिलत् । श्रीसूरिर्भूरिसूरिश्रीर्जितान्यप्रतिवाद्यरिः॥२३॥
विनयात् पातिसाहि-श्रीमदकब्बर आनमत् । तं तदा शिरसा भूपान् पश्यतः शस्यचेतसा ॥
अथाप्रच्छद् गुरुं धीमान् पातिसाहिरिदं तदा । षड्दर्शनानुसम्बन्धिधर्मवार्तां सुधर्मधीः ॥
दर्शनानां तदा षण्णां विविच्यैव पृथक्पृथक् । तं विवेकिनमुर्वीनं स धर्मं प्रत्यबोधयत् ॥२६॥
सर्वदर्शनसम्बन्धिधर्मं ज्ञात्वा पृथक्पृथक् । केनचित्प्रेरितः साहिरपृच्छत् पुनरीदृशम् ॥२७॥
सूरे किं मनुषे न त्वं रामं गङ्गां च मातृकाम्? । सूरिः प्राह प्रभो मैवं मन्वेहं तद् वयं सदा ॥
रामध्यानं सदा कुर्वे हृदि तद्ध्यानतत्परः । नोच्चरामि मुखेनास्य ज्ञानहीनश्च कीरवत् ॥२९॥
राति सर्वं मनोभीष्टमिति रा वाञ्छितप्रदः । मथ्नाति सर्वतः पापमिति मः पापनाशकः ॥३०॥
इत्यक्षरद्वयार्थत्वाद् रामनाम स्मृतं बुधैः । तत्स्मरामि सदा स्वामिन् न स्मरामि कथं किल ।
—विस्मरामि न कर्हिचित्—इति पाठान्तरम् ॥३१॥ युग्मम् ॥
अपवित्रशरीरस्य रामध्यानं च चेतसि । अपवित्रे तथा मार्गे स्यात्सदा पापवृद्धये ॥ ३२ ॥
—इति रामनाम-ध्यानाङ्गीकारः ॥
अहो अङ्गमलाक्षेपो गङ्गायां क्रियते कथम् । गङ्गा तु मातृकोच्येत पूज्यते देवतेव सा ॥३३॥
तस्यामङ्गमलक्षेपं स्नानात् कुर्यां न लोकवत् । पावित्र्यभृति मात्रङ्गे कथं पुत्राङ्गसङ्गतिः ॥३५॥
—यतः पवित्रमात्रङ्गे कथं पुत्राङ्गसंगतिः—इति पाठान्तरम् ॥
जलमेव तदङ्गं स्यान्माननीयं तदेव च । तद्विनोच्येत नो गङ्गां तद्विना न तदर्चनम् ॥३६॥

---

२३—भूरिः प्रचुरा सूरिषु पण्डितेषु भट्टारकेषु वा श्रीर्वेषरचना १ शोभा २ भारती ३ लक्ष्मीः ४ त्रिवर्गसम्पत्तिः ५ मति ६ र्वा यस्य सः भूरिसूरिश्रीः । अथवा श्रीसूरिर्भूरिसूरिश्रीतिरस्कारकरः परः इति पाठान्तरम् । तदाऽस्यायमर्थः भूरिसूरीणां प्रचुरभट्टारकाणां प्रचुरपण्डितानां वा श्रीः पूर्वोक्तषडर्था तस्यास्तिरस्कारं करोतीति भूरिसूरिश्रीतिरस्कारकरः परः प्रकृष्टः तदेव प्रकटयति ।

३६—तदेव जलमेव तद्विना जलेन विना गङ्गा नोच्येत न कथ्येत । तद् विना गङ्गां विना । न तदर्चनं न गङ्गां पूजा न गङ्गां माननमित्यर्थः ।

मादृशाङ्गस्य संयोगात् तदङ्गं न सुखायते । तदङ्गदुःखे दुःखं स्यान्मदङ्गस्यापि सर्वथाः ॥३७॥
पवित्रं भवदङ्गं चेन्मदङ्गं मलिनं स्पृशेत् । भवदङ्गं तदा स्वामिन्, मदङ्गान्न सुखायते ॥३८॥
एवं राजेन्द्र गङ्गाङ्गं मादृशाङ्गस्य योगतः । सर्वदा बहुदुःखाय न सुखाय कदापि हि ॥३९॥
विना गङ्गाजलं देव प्रतिष्ठादि भवेन्न हि । तन्मे मान्या सदा गङ्गा न मान्येत्युच्यते कथम् ॥४०॥

—इति गङ्गाङ्गीकारः ।

बोधयित्वेति सज्ज्ञानं पातिसाहिमकब्बरम् । अरञ्जयत्तदा सूरिरजयत् प्रतिवादिनः ॥४१॥
जितकाशी तदा भूत्वा महोत्सवपुरस्सरम् । सूरिरायाद्धत्साक्षाज्जयरूपमुपाश्रये ॥४२॥

—इति श्रीमदकब्बरपातिसाहिसदसि श्रीविजयसेनसूरिभिः पराजितप्रतिवादिवर्णनम् ॥

चतुर्मास्यौ द्वके तत्र व्यधाद् धर्माभिलाषुकः । आग्रहात्पातिसाहेस्स तच्चेतस्तोषको यतः ॥४३॥
हीरविजयसूरीन्द्रं संविज्ञायामयाविनम् । पातिसाहिं स आपृच्छ्य श्रीसूरीन्द्रस्ततोऽचलत् ॥
गूर्जरं देशमागच्छंश्चतुर्मासीं समाप्तवान् । श्रीसूरिः सादडीद्रङ्गे सद्रङ्गे श्रीभिरन्वहम् ॥४५॥
संजातं स्वर्गिणं स्वर्गे श्रीहीरविजयं गुरुम् । मर्त्यलोकं परित्यज्य वचः श्रुत्वेति दुस्सहम् ॥४६॥
श्रावकैरक्ष्यमाणोऽपि चतुर्मास्यन्त आग्रहात् । सोत्सवः पत्तनद्रङ्गे प्रस्थायायात्ततो गुरुः ॥४७॥

---

३७—तदङ्गं जलमयं गङ्गाङ्गं कर्तृ न सुखायते न सुखं वेदयतीत्यर्थः । कस्मात् मादृशाङ्गस्य संयोगात् । तदङ्गदुःखे जलमयगङ्गाङ्गदुःखे मदङ्गस्यापि सर्वथा दुःखं स्यात् । तदेव प्रकटयन्नाह.

३८—उक्तिलेशश्चास्य-हे स्वामिन् हे अकब्बरपातिसाहे चेद् यदि मलिनं मदङ्गं मम कायः पवित्रं भवदङ्गं भवतः कायं कर्मतापन्नं स्पृशेत् तदा मदङ्गात् मम कायात् कारणात् भवदङ्गं भवतः कायः कर्ता न सुखायते न सुखं वेदयतीत्यर्थः । उभयत्रापि श्लोके सुखायते इति क्रियापदं सुखादिभ्यः कर्तृवेदनायां इति अनुभवेऽर्थे क्यङि सिद्धम् ।

३९—एवममुना प्रकारेण मदङ्गाद् भवदङ्गं न सुखं अनुभवति इति लक्षणेन ।

४१—अजयत्प्रतिवादिन इत्यत्र च शब्दाप्रयोगेऽपि आर्थौ अन्वाचयार्थश्चकारो ज्ञेय ः।

४३—स श्रीविजयसेनसूरिः तत्र श्रीलाभपुरे द्वके द्वे चतुर्मास्यौ व्यधात् । कस्मात् पातिसाहेः श्रीमदकब्बरस्याग्रहात् । कथंभूतः स ? धर्माभिलाषुकः । कथं भूतः स यतः तच्चेतस्तोषकः श्रीमदकब्बरपातिसाहिहृदयसन्तोषकारी । द्वके इत्यत्र भस्त्रैषाजाज्ञाद्वास्वानामिति वैकल्पिकेकाराभावः । इकारसद्भावपक्षे द्विके इत्युभयमपि रूपम् ।

४४—श्रीसूरीन्द्रः श्रीविजयसेनसूरिः ततः श्रीलाभपुरात् ।

४७—गुरुः श्रीविजयसेनसूरिः ततः सादडीद्रङ्गात् ।

स्थित्वा तत्र सभावित्रः स भूयांसमनेहसम् । पुर्यां त्र्म्बावतीनाम्न्यां सङ्घाहूतस्ततो गतः ॥
कृत्वा तत्र चतुर्मासीं भवन्नानामहोत्सवैः । प्रस्थायायात्ततः सूरिः श्रीराजनगरे वरे ॥४९॥
नानाद्रव्यव्ययैर्दिव्यैर्जायमानैर्महोत्सवैः । चतुर्मासीं व्यधात्तत्र श्रीसूरिः सूरिशेखरः ॥५०॥
ततश्चाहम्मदावादोपपुरे श्रीशकन्दरे । श्रीसङ्घाग्रहतस्तस्थौ चतुर्मासीं गुरूत्तमः ॥५१॥
प्रत्यस्थादुत्सवैस्तत्र शान्तिबिम्बं स सद्गुरुः । दौषिकान्वयविख्यात-लहुयाख्यश्राद्धकारितम् ॥
लाटापल्ल्यां समागच्छत् ततः प्रस्थाय सोत्सवः । तत्रावसच्च सूरीन्द्रश्चतुर्मासीं सुखाश्रितः ॥
अचिन्तयत् स्थितस्तत्र चेतसीत्येकदेदृशम् । पदार्हाः सन्ति मे शिष्याः श्रीनन्दिविजयादयः ॥
पदयोग्येषु शिष्येषु श्रीनन्दिविजयादिषु । कः शिष्यो भविता ख्यातो गच्छभारधुरन्धरः ॥
विचिन्त्येति स्थितो ध्याने तपःकुर्वन्ननेकधा । त्रीन्मासान् यावदत्युग्रं सूरिरेकाग्रमानसः ॥५६॥
अधिष्ठाता तदेत्याख्यत् सूरिमन्त्रस्य मन्त्रिणम् । प्रत्यक्षीभूय सूरीन्द्रं तपः साध्यं न किं यतः ॥
विद्याविजयनामायं शिष्यस्ते गच्छनायकः । भविता जगति ख्यातो विचारो नापरो गुरो ॥
श्रुत्वा श्रीसूरिमन्त्रस्याधिष्ठातुरिति सद्वचः । जाग्रत्प्रभावकं सूरिः सूरिमन्त्रं सदार्चिदत् ॥५९॥
विद्याविजयनामानं शिष्यं श्रीगच्छनायकम् । भाविनं मनसि ज्ञात्वा श्रीसूरिर्मुमुदे हृदि ॥
प्रातिष्ठत ततः सूरिः साध्वाचारपरायणः । यतोऽवस्थानमेकत्र साधूनां युज्यते न हि ॥६१॥
ग्रामानुग्राममाचारात् विहरञ् जिनवत्स्वयम् । सहर्षः समवासार्षीत् श्रीमदुन्नतपत्तने ॥६२॥
तत्रत्याः श्रावकाः सर्वेऽप्यकुर्वन्नुत्सवान् घनान् । दर्शं दर्शं मुनीशं तं वन्दं वन्दं दिने दिने ॥६३॥
सूरिः कृत्वा चतुर्मासीं तत्रान्यत्र ततोऽचलत् । पवित्रचरणन्यासैः सद्धरित्रीं पवित्रयन् ॥६४॥
द्रङ्गेष्वन्येषु वृद्धेषु न्यवसत्स विचक्षणः । अनेहसं च भूयांसं लोकान् धर्मांश्च कारयन् ॥६५॥

---

४८–तत्र पत्तनद्रङ्गे सभावित्रः सह भावित्रेण भद्रेण वर्तते यः स सभावित्रः । भावित्रशब्दो हैमोणादौ भद्रपर्यायः । ततः पत्तनद्रङ्गात् ।

४९–तत्र त्र्म्बावती नाम्न्यां पुर्यां । ततः त्र्म्बावती नाम्न्याः पुर्याः श्रीस्तंभतीर्थादित्यर्थः । श्रीराजनगरे श्रीमति अहम्मदावादे ।

५०–तत्र अहम्मदावादे । ५१–गुरूत्तमः श्रीविजयसेनसूरिः ।

५२–प्रत्यस्थात् प्रतिष्ठत् प्रतिष्ठामकरोदित्यर्थः । तत्र शकन्दरपुरे ।

५३–ततः शकन्दरपुरात् । तत्र लाटापल्ल्यां लाडोलपुरे इत्यपरनाम्नि ।

५७–इतीति किं तदाह । ५८–( उन्नतपत्तने ) ऊनानगरे ।

६४–ततः ऊनानगरात् अन्यत्र नगरेषु देशेषु वा अचलत् ।

अस्मिन्नवसरे सूरिं प्रतिष्ठायै समाह्वयत् । श्रीसुरेतपुरात् मेघः स्वपत्नीलाडकीरितः ॥६६॥
ततः प्रस्थाय सूरीन्द्रः श्री[illegible]नात् । प्रतिष्ठायै समागच्छत् श्रीमदुन्नतपत्तने ॥६७॥
अकरोत् स ततः श्रेष्ठां प्रतिष्ठां सुदिने दिने । कारितां श्राद्धमेघेन यथाविधि महोत्सवात् ॥
न केचिदपि तादृक्षीं यादृशीं प्रागकारयन् । प्रतिष्ठां स न कश्चित्प्राग् व्यधापयद् व्यधाच्च सः ॥
अत्रान्तरेऽन्तिषच्छ्रेष्ठः श्रीनन्दिविजयाह्वयः । कोविदः सर्वविद्यासु सर्वभाषाविदुत्तमः ॥७०॥
गुरवो हि फिरङ्गीणां पादरी इति तद्गिरा । सन्ति तान् रञ्जयामास पत्रद्वारा दुरात्मनः ॥७१॥
अत्यन्तं रञ्जितास्ते च जिनधर्मविदस्तदा । अभवन् जिनभक्ताश्च साधुसेवापरायणाः ॥७२॥
पादरीवृन्दमानन्दादार्हन्तं धर्ममुत्तमम् । गुणांश्च जैनसाधूनां फिरङ्गीणां पुरोऽवदत् ॥७३॥
ततः फिरङ्गीसल्लोका जैनसाधून् दिदृक्षवः । विवन्दिषव इत्याख्यन् पादरीवृन्दमादरात् ॥
पादरी ! श्रीगुरुं शीघ्रं समाहूय सुभक्तितः । अपरं न किमप्यत्र विचारय विचारवित् ॥७५॥
ततश्च पादरी पत्रं विलेख्य च विमोच्य च । सूरीन्द्रमाह्वयामास श्रीमद् द्वीपपुरे तदा ॥७६॥
नायाति स्म तदा सूरिर्विना मेघस्य सद्वचः । यतो मेघः फिरङ्गीतो भीतोऽतो न समाह्वयेत् ॥
मेघनामास्ति कः ख्यातः सर्वतो जगतीतलम् । किं गोत्रः कस्य पुत्रश्च वसति क्व च पत्तने ॥
इति सर्वं समाख्यामि यथाजातमनिन्दितम् । तत्परीभूय तद्भव्याः श्रावकाः शृणुतादरात् ॥
तद्यथा—अथास्ति भरतक्षेत्रे नगरं द्वीपनामकम् । अधिकारी फिरंगीणां तत्र राज्यं करोत्यलम् ॥
रामसीतार्चनं नित्यं मनुते नान्यदेवता । विना स्वधर्ममन्येषां धर्मं च न कदापि सः ॥८१॥
श्रेष्ठी सहस्रदत्तोऽभूत्तत्र सर्वर्द्धिमत्तरः । पारिक्खगोत्रविख्यातो माननीयतरोत्तरः ॥८२॥
फिरङ्गीणां प्रियोऽत्यन्तं तस्य पुत्रः पवित्रधीः । मेघो नाम जगत्ख्यातो वर्त्तते महिमानिधिः ॥
नागात् सूरिः समाहूतः श्रीफिरङ्गाधिकारिणा । मेघस्योक्तिं विना वार्ता ज्ञातपूर्वीति भक्तिमान्
श्रावकेणान्यदा तेन स इति प्रत्यबोध्यत । गुरुरस्ति वरिष्ठः श्रीः प्रत्यक्षपरमेश्वरः ॥८५॥
इहायाति स आहूतो यथाज्ञा भवतो भवेत् । इह तस्मिन् समायाते मम धर्मोऽभिवर्धते ॥८६॥
अधिकारीति हि श्रुत्वा प्रससादतरां तदा । दुष्टात्मापि विशिष्टात्मा पृष्टस्तुष्टो भवेज्जनः॥८७॥
—साधुसंयोगतो भवेत्; विज्ञप्तो विनयाद्भवेत्—इति पाठान्तरद्वयम् ॥

६९—उक्तिलेशश्चास्य-स मेघः यादृशीं प्रतिष्ठां व्यधापयत् तादृक्षीं प्राग् पूर्वं केचिदपि न अकारयत् । चः पुनः स विजयसेनसूरिः यादृशीं प्रतिष्ठां यथाविधि व्यधात् तादृक्षीं कोऽपि प्राग् न व्यधात । अत्र प्रतिष्ठामिति कर्मपदं उभयत्र व्याख्येयं व्यधाद् इति क्रियापदमपि द्विरावर्तनीयम्.

७१—तद्गिरा फिरङ्गीणां भाषया इत्यर्थः । ७४—इतीति किं तदाह ।

८९—अध्यक्षं फिरंगीणां अधिकारिणां—अध्यक्षाधिकृतौ समौ इति हैमः ।

स तदा तं प्रति प्राह ममानुज्ञास्ति तेऽधुना । श्रीगुरुं त्वद्गुरुं शीघ्रं समाहूय समानय ॥८८॥
अध्यक्षं तं प्रतीत्याह स तदा प्रीतमानसः । भवन्नामाङ्कितं पत्रं लिखित्वा मुञ्च भो प्रभो ॥
सोऽपि तत्पुण्यवश्यात्मा लिखित्वा पत्रमादरात् । स्वसेवककरे दत्वा स्वसेवकमचालयत् ॥९०॥
ततः सोऽप्यचलच्छीघ्रं यद्राजा क्रूरशासनः । उन्नताख्यं पुरं श्रीमदवाप त्वरितं चलन् ॥९१॥
यत्रोपाश्रय आसीनो गुरुस्तं तत्र सोऽनमत् । दर्शं दर्शं तदा तस्य नेत्रे नातृप्यतां तदा ॥९२॥
अध्यक्षस्य फिरंगीणां पत्रमेतद्गृहाण भोः । भवदाकारणायाहं तेन प्रेषित आगतः ॥९३॥
इत्यादि कथयन् प्रीतो वारंवारं गुरोः पुरः । स ददौ श्रीगुरोर्हस्ते पत्रं फिरंगिभूपतेः ॥९४॥
तत्पत्रं वाचयामास संघस्याग्रे तदा गुरुः । श्रीगुर्वाकारणं श्रुत्वा श्रीसंघेनाप्यतुष्यत ॥९५॥
स तदा सङ्घमापृच्छ्य चचालोत्तालमानसः । आलस्यं धर्मकार्येषु न सतां युज्यते यतः ॥९६॥
प्रचलन् पथि धर्मात्मा प्रापयन् धर्ममार्हतम् । लोकानधर्मिणः सूरिः प्राप द्वीपपुरं क्रमात् ॥
तदा संभूय तत्रत्यः सङ्घो मेघयुतोऽभ्यगात् । नत्वा कृत्वोत्सवं सूरिं समानयदुपाश्रये ॥९८॥
दत्वेति प्राभृतं मेघस्तदाधिकृतमब्रवीत् । यो गुरुर्भवताहूतः स साम्प्रतमिहागतः ॥९९॥
स आहेति तदा प्रीतः स आयातु ममाग्रतः। सोऽप्यागत्यान्तिके तस्य धर्मलाभाशिषं ददौ ॥
धर्मलाभाशिषं श्रुत्वा स तुतोषतरां हृदि । स्थित्वैकत्र च तौ धर्मगोष्ठीमकुरुतां मिथः॥१०१॥
धर्मगोष्ठीविधानेन स प्रसन्नोऽभवद् गुरौ। आह चेति यथेच्छं भो निवसन्त्वत्र साधवः॥१०२॥
ततस्तस्याग्रहात्तत्र श्रीसूरिः शरदौ द्वके । चतुरो द्वे चतुर्मास्यौ न्यवसद् धर्मवृद्धये ॥१०३॥
दुरात्मानं पुरा नित्यं धर्मात्मानं च नूतनम् । चिरन्तनमिवात्यन्तं वरात्मानं सदातनम् ॥
अध्यक्षं श्रीफिरंगीणां साधुसेवापरायणम् । विधाय करुणात्मानं प्रतस्थे स गुरुस्ततः ॥१०५॥
श्रीमद्द्वीपपुरे नित्यं प्रत्यब्दमथ साधवः । निवसन्ति हि कुर्वन्तः कारयन्तश्च सद्वृषम्॥१०६॥

—इति फिरंगीणां अधिकारीप्रतिबोधः श्रीद्वीपे ।

प्रतिष्ठा जिनबिम्बानां प्रतिबोधोऽन्यतीर्थिनाम् । मालारोपादयोऽनेके धर्मा एकैकतोऽधिकाः ॥
देशे देशे महीयोभिरुत्सवैरतिसुन्दरैः । सर्वदा सर्वदानाढ्यैर्ग्रामे ग्रामे पुरे पुरे ॥१०८॥
कृताः श्रीसूरिणा रम्याः कारिताश्च विशेषतः । तानहं नालिखं सर्वान् ग्रन्थविस्तरभीतितः ॥

—त्रिभिर्विशेषकम् ॥

शत्रुञ्जयोज्जयन्तादि तीर्थयात्रा अनेकधा । अनेकसङ्घसंयुक्तः सोऽकरादुत्सवोत्करैः ॥११०॥
लिखितुं तान् शक्नोमि नव्यनव्यान् दिने दिने । वर्णनीयान् सदा देवैर्यतोऽहमलसो भृशम् ॥

---

९८—अभ्यगात् अभिमुखमगच्छत् ।

इत्थं वासकुमारचारुचरणादानप्रभावोद्भवं
माहात्म्यं विजयादिसेनसुगुरोस्सत्यं जगद्विश्रुतम् ।
श्रीश्रीवल्लभपाठकः समपठत्तच्छ्रावकाः सन्ततं
श्रावंश्रावमनिन्दितं स्वहृदयेऽभ्यानन्दताऽनिन्दिताः ॥११२॥

इति श्रीवल्लभोपाध्याय विरचिते श्रीमत्तपागच्छाधिराज पातसाहि श्रीअकब्बर प्रदत्त जगद्गुरु विरुदधारक भ० श्रीहीरविजयसूरीश्वर० पातसाहि श्रीजिहांगीर प्रदत्त महातपा विरुदधारि भट्टारक श्रीविजयदेवसूरीश्वर गुणवर्णन प्रबन्धे श्रीमद्विजयदेवमाहात्म्य नाम्नि महाकाव्ये श्रीविजयदेवसूरि दीक्षाग्रहणप्रभावोद्भव श्रीविजयसेनसूरि माहात्म्यवर्णनो नाम षष्ठः सर्गः ॥६॥



११२—भो श्रावकाः ! तत् विजयादिसेनसुगुरोः श्रीविजयसेनसूरीश्वरस्य माहात्म्यं सन्ततं सदा श्रावं श्रावं श्रुत्वा श्रुत्वा स्वहृदये अभ्यानन्दत । कथंभूतं इत्थं अनेन प्रकारेण श्रीमदकब्बर पातिसाहि परिषद्वादविधानपराजितानन्तप्रतिवादिवृन्दादिलक्षणेन वासकुमार चारुचरणादानप्रभावोद्भवम् । पुनः कथंभूतं ? सत्यं । पुनः कथंभूतं ? जगद्विश्रुतम् । तदिति किं ? यन्माहात्म्यं श्रीश्रीवल्लभपाठकः समपठयत् अकथयत् ।

## सप्तमः सर्गः

अथाससाद नैपुण्यं पुण्यं पुण्यवतां सताम् । सयौवनमिव श्रेयः स यौवनवयश्च सत् ॥१॥
सिद्धान्तानां समस्तानां तपोभेदविधानतः । साङ्गे प्रवचनेऽधीती सोऽभवत् क्रमपाठतः ॥२॥
दर्शं दर्शं ततः सूरिः क्षणयुक्तः प्रतिक्षणम् । विद्याविजयनामायं गणिरित्यब्रवीद् ध्रुवः ॥३॥
षोडशस्य शतस्याऽस्मिन् पञ्चपञ्चाशवत्सरे । श्रीमत्यहम्मदावादोपपुरे श्रीशकन्दरे ॥४॥
प्रतिमायाः प्रतिष्ठाया उत्सवे भूरिरैव्यये । श्राद्धेन लहुआकेन स्ववंशाम्भोजभास्वता ॥५॥
प्रशस्यचेताः श्रीसूरिर्भूरिसूरिद्धिपोपमः । पण्डितपदमानन्दि तस्मै पुण्यात्मने ददौ ॥६॥
मार्गशीर्षे सिते पक्षे प्रकृष्टे पञ्चमीदिने । देशदेशसमाहूतजनवृन्दविराजिते ॥७॥

—चतुर्भिः कलापकम् ॥

अथास्ति भरतक्षेत्रे स्तम्भतीर्थाभिधं पुरम् । यत्सुखं वर्तते तत्र न तत्स्वर्गे कदापि हि ॥८॥
यत्र श्रीपार्श्वनाथस्य महिमा महिमाऽवति । आवतीव हियं द्रष्टुं वार्धिर्वेलाच्छलात्किल ॥९॥
यत्र पार्श्वजिनं नित्यं नौतीवान्वहमम्बुधिः । वेलाच्छलेन सद्रत्नाक्षतान् मुञ्चन् पुरान्तिके ॥
यत्र सन्ति सतां सन्ति गृहाणि व्यवहारिणाम् । विमानैः स्पर्धमानानि मनोरमतयोच्चकैः ॥

निवसन्ति च ये तत्र द्रव्याढ्या व्यवहारिणः ।
दातृत्वसद्गुणाधिक्यात् सुरेभ्यो भागिनोऽधिकाः ॥१२॥ युग्मम् ॥

व्रतधारी सदाचारी ब्रह्मचारीश्वरः परः । परन्तपतिरस्कारी श्रेयस्कारी सदा नृणाम् ॥१३॥

धर्मकारी गुणाधारी प्रीतिकारी नरोत्तरः ।
व्यवहारीश्वरस्तत्र श्रीमल्लो नाम वर्तते ॥१४॥ युग्मम् ॥

---

१–स विद्याविजयः अथ पुण्यवतां सतां मध्ये पुण्यं अत्यद्भुतत्वात् अनिन्दनीयत्वाच्च पवित्रं नैपुण्यं निपुणभावं आससाद प्राप्तवान् । कथंभूतं नैपुण्यं ? श्रेयः अतिशयेन प्रशस्यम् । पुनः कथंभूतं उत्प्रेक्ष्यते—सयौवनमिव सह यौवनेन वर्तते यत्तत् सयौवनं; तत् सयौवनं तदिव; यादृशं यौवनवयोयुतं शरीरं श्रेयः स्यात् । तथा नैपुण्यमपि अतिविशिष्टत्वात् अध्ययनाध्यापनादिषु सर्वकर्मसु जागरूकस्फूर्तिमत्त्वाच्च यौवनयुततुल्यमित्यर्थः । यौवने हि सर्वं अप्रशस्यमपि प्रशस्यतरं भवति तर्हि प्रशस्यस्य किं वक्तव्यं, नैपुण्यस्यात्याधिक्यात् अत्यद्भुतत्वात् च । यौवनयुतेन औपम्यं केवलं नैपुण्यमेव प्राप नान्यत्किमपीत्याह—च पुनः यौवनवयः आससाद । कथंभूतं यौवनवयः सत् प्रधानम् ।

९–प्राक् आवतीति क्रियापदं आङ् पूर्वकं । सामस्त्येन पालनार्थं महिशब्दोऽत्र इकारान्त औणादिकः । द्वितीयं आवतीति क्रियापदं गत्यर्थस्यापि अवधातोराङ् पूर्वकत्वात् आगमनार्थमवसेयम् ।

निश्चला बहुला लक्ष्मीरुल्लासं मल्लते कुले । नाम जल्पन्ति जल्पाकाः श्रीमल्ल इति सार्थकम् ॥

भ्रातृव्यस्तस्य वा भाति सोमः सोमसमाज्ञया । सोमवत् स लोकानामभिप्रेतः प्रियंवदः ॥

सोमो नाम जगज्ज्योतिः समरात्रिंदिवद्युतिः ।
अन्यो रात्रिद्युतिः सोमः कियांस्तस्याग्रतोऽवति ॥१७॥

अथैतस्यान्यदा चाग्रे भक्त्यैकाग्रश्रुतिश्रुतेः । लोकोक्ता लोकवार्तेति कैश्चिदौच्यत सज्जनैः॥१८॥

विजयसेनसूरीन्द्रस्स्वशिष्यमभिषेक्ष्यति । विद्याविजयनामानं विद्याविजयमाननात् ॥१९॥

श्रुत्वा स ईदृशं वाक्यं विवेकी धर्मकर्मसु । वाञ्छन् नवनवं धर्मं हृद्यविन्दत्तदेदृशम् ॥२०॥

एतत्पट्टाभिषेकस्य महोत्सवमहोत्सवम् । करवाणि तदाऽभाणि तेनेति च तदा जनाः ॥२१॥

लक्ष्मीरनर्गला लीलां कुरुते मम वेश्मनि ।
युज्यतेऽस्याः कृतार्थत्वमस्मिन्नुत्सवकर्मणि ॥२१॥—पाठान्तरम्

—इति व्यज्ञपयत्सङ्घं विनयात्स महर्द्धिकम् । करवाण्याज्ञयावोऽहमेतत्पट्टमहोत्सवम् ॥२२॥

---

१५—मलि मल्लिधारणे भ्वादिरात्मनेपदी । जल्पाकाः पण्डिताः ।

१६—तस्य श्रीमल्लस्य भ्रातृव्यः सामः सोमनामा सोमसमाज्ञया चन्द्रोज्ज्वलयशसावा-भाति आतिशयेन शोभते । यशः कीर्तिसमाज्ञा चेत्यमरः । सोमवत् चन्द्रवत् सर्वलोकानामभिप्रेतः ।

१८—भक्त्या एकाग्रयोः श्रुत्योः कर्णयोः श्रुतिः श्रवणं यस्य तस्य भक्त्येकाग्रश्रुतिश्रुतेः । यद्यत्र समासान्तमेकपदं तर्हि इको यणचीति याणि एकादशस्वरमध्य एव पाठः । अथ च भक्त्येति तृतीयान्तं पदं पृथक् तदा वृद्धिरेचीति वृद्धौ द्वादशस्वरमध्य एव पाठः । इतीति किं तदाह ।

१९—विद्याविजयाभ्यां माननं विद्याविजयमाननं तस्माद् हेतोः । अथवा विद्या च विजयश्च माननं चेति त्रिभिः समाहारे एकवद्भावे च विद्याविजयमाननं तस्माद् हेतोः । अथवा विद्याविजयमाननमिति पाठः । तदायमर्थः—कथंभूतं विद्याविजयनामानं विद्याविजयाभ्यां कार-णाभ्यां माननं सर्वलोके यस्य स तथा तं । अथवा विद्याभिश्चतुर्दशसंख्याभिः शिक्षा कल्पो व्याक-रणमित्यादिकाभिर्यो विजयस्तेन कारणेन माननं यस्य स तथा तम् ।

२०—विद विचारणे रुधादिः परस्मैपदी ।

२१—तदा तस्मिन् काले श्रीविजयसेनसूरिः विद्याविजयनामानं स्वशिष्यमभिषेक्ष्यति इति श्रवणकाले । तेन श्रीमल्लेन जनाः अर्थात् श्रावकलोका इति अभाणि इतीति किं एतत्पट्टा-भिषेकस्य विद्याविजयपट्टाभिषेकस्य महोत्सवमहोत्सवं करवाणि महान् उत्सवो यस्मिन् यस्माद् वा दर्शनाल्लोकानां स महोत्सवः महांश्चासावुत्सवश्च महोत्सवः महोत्सवश्चासौ महोत्सवश्च महोत्सवमहोत्सवस्तम् ।

श्रीसङ्घोऽपि तदाऽवादीदाश्रवो भवतोऽस्त्ययम् । मा प्रमाद्य हृदानन्द्य सद्यः श्रीमल्ल तं कुरु ॥
ततः श्रीमल्ल आनन्दात्तदानीं मोदमेदुरः । श्रीसङ्घस्य समक्षं स्राक् इति पत्रे व्यलेखयत् ॥२४॥
स्वस्ति श्रीदेवमादीव्य सर्वाभीष्टार्थदायकम् । श्रीमत्यहम्मदावादपुरे सद्भर्भेरीवरे ॥२५॥
विजयसेनसूरिः स जिनशासनभूषणम् । राजते यस्तपः कुर्वन् हन्ति पातकदूषणम् ॥२६॥
त्वरितं दुरितं हन्ति नामोच्चारोऽपि ते कृतः । किं स्तुमस्त्वत्पदाम्भोजवन्दनापूजने गुरो ॥
तत्र स्युः सम्पदः सद्यो निरवद्या निरापदः । यत्र त्वच्चरणन्यासः किं स्तुमस्त्वत्पदस्थितिम् ॥
एवं सूरीश्वरं स्तुत्वा वन्दते च वदत्यदः । स्तम्भतीर्थस्थितः श्राद्धः श्रीमल्लस्सङ्घसंयुतः ॥२९॥
प्रमोदे चाभिनन्दामि भवत्पादप्रसादतः । इच्छामि च भवत्कायकुशलं कुशलप्रदम् ॥३०॥
पूज्यराज पदाम्भोजमकरन्दस्त्वदीयकः । मदीयनेत्ररोलम्बं पुष्णात्वत्रागमोद्भवात् ॥३१॥
भूयांसः श्रावकाः सन्ति पदोत्सवविधायकाः । परमस्योत्सवं कर्तुं चिकीर्षामि गुरूत्तम ॥३२॥
श्रीपूज्यात इहागच्छ सङ्घमापृच्छ्य सर्वतः । पिपर्मि परमं सर्वं मामकं हि मनोरथम् ॥३३॥
पत्रमीदृशमालिख्य श्रीगुरूचितमादरात् । अलिखत्स पुनः पत्रं श्रीसङ्घोचितमादृतम् ॥३४॥
तद्यथा–स्वस्ति श्रीजिनमानम्य, रम्यधर्मपरायणम् । श्रीमदहम्मदावादपुरवासिमहाजनम् ॥
श्रीमल्लः स्तम्भतीर्थस्थो ज्योक् करोति करोति च । विज्ञप्तिं विनयेनेति विनयी विनयीश्वरम् ॥
विजयसेनसूरीन्द्रा विद्याविजयनामकम् । युवराज्यपदे स्वीये धर्म्ये न्यसति सम्प्रति ॥३७॥
कर्तुं तस्योत्सवं श्रीमत्सङ्घादेशेन भक्तितः । वाञ्छामीति ततः सङ्घो मुञ्चतादिह सद्गुरुम् ॥३८॥
इह श्रीस्थम्भतीर्थे–
बिभर्तु परमं प्रेम श्रीसंघो मयि सेवके । पिपर्तु च जनाभीष्टमिमं मन मनोरथम् ॥३९॥
इति पत्रं समालिख्य श्रीसङ्घोचितमद्भुतम् । आह्वयत्सेवकं स्वीयं श्रीमल्लः श्रावकस्ततः ॥४०॥

---

२३–अयं श्रीसङ्घो भवतस्तव आश्रवः कथनकारी अस्ति। आश्रवो वचनेस्थित इति हैमः।

२४–भर्भरीशब्द औणादिकः श्रीपर्यायः। सत्या विद्यमानया प्रशस्तया वा न्यायोपार्जितत्वात् । भर्भर्या श्रिया वरंयत्तत् सद्भर्भरीवरं तस्मिन् ।

३९–ज्योक् इति कालभूयस्त्वप्रश्नयोः। ज्योग् जीवामः; ज्योक् कृत्य नृपार्तिं गतः। विनयी विनयवान् । कथंभूतं महाजनं ? विनयीश्वरं विनयवतां नायकं, यद्वा विनयी विनयवान् स चासावीश्वरश्च समृद्ध इति कर्मधारये विनयीश्वरस्तं । अनेन श्रीमदहम्मदावादवासिमहाजनस्य विनयोपेतत्वं महर्धिकत्वं च दर्शितम् । इतीति किं ? तदाह.

४०–श्रीसङ्घ इमं पट्टाभिषेकोत्सवकरणलक्षणं मम मनोरथं पिपर्तु पूरयतु । कथंभूतं इमं मनोरथं जनाभीष्टं जनस्य अर्थात् श्रीमदहम्मदावादाद्यपरनगरवासिमहाजनस्याभीष्टो जनाभीष्टस्तं। अनेन विशेषणेन श्रीमदहम्मदावादपत्तनाद्यनेकनगरनिवासिनां महर्द्धिकानां श्रावकाणां पदमहो-

पत्रं गुरोश्च सङ्घस्य सेवकस्य करे ददौ । अवादीच्च तदा मोदात् श्रीमल्ल इति वाचिकम् ॥४१॥
वन्दनां श्रीगुरोर्ब्रूया देयाः पत्रं करे ततः । ज्योकूकारं सर्वसंघस्य पृच्छेश्च कुशलं तथा ॥४२॥
आह्वयत्याव भो स्वामिन् श्रीमल्लः सङ्घसंयुतः । त्वदीयागमने तस्य मन आनन्दमाप्स्यति ॥
इत्युदित्वा गुरुं नत्वा भक्त्या परमया तथा । श्रीसङ्घस्य करे पत्रं दध्याज्ज्याकूकृत्य कृत्यवित् ॥
इति विज्ञपयत्येष श्रीमल्लः सङ्घसेवकः । श्रीमदहम्मदावादसङ्घं सङ्घमिव श्रियाम् ॥४५॥
विजयसेनसूरीन्द्रं मुञ्च श्रीस्तम्भतीर्थके । स्वशिष्यमभिषेक्तारं विद्याविजयनामकम् ॥४६॥
इत्युक्त्वा चालयत्सङ्घः स स्वसेवकमाशुगम् । सोऽप्यचालीत्तदोत्तालः शीघ्रकृद् यत्पतिप्रियः ॥
सम्प्रापाहम्मदावादपुरं स त्वरितं चलन् । श्रीपूज्यराजपादाब्जमवन्दत च भक्तितः ॥४८॥
ददौ पत्रं तदा हस्ते सशस्ते श्रीगुरोर्मुदा । स स्वयं वाचयामास सुप्रसन्नमना हि तत् ॥४९॥
प्रददौ सङ्घपत्रं च सङ्घपाणौ सदक्षिणः । सङ्घेनापि तदाऽवाचि श्रीमता तत् शुभात्मना ॥५०॥
संभूय श्रीगुरुः सङ्घ उभौ विमृशतुस्तदा । किं कर्तव्यमिति स्पष्टं ब्रूतेति मिथ ऊचतुः ॥५१॥
पूज्यं व्यज्ञपयत् सङ्घः स्तम्भतीर्थं व्रज प्रभो । वाञ्छितं कुरु तस्याशु यल्लोकः स्वेष्टसिद्धितुट् ॥
शुभं मुहूर्तमालोक्य श्रीसङ्घानुज्ञया तदा । विजयसेनसूरीन्द्रः स्तम्भतीर्थमचीचलत् ॥५३॥
स्तंभतीर्थपुरं प्राप्नोत् क्रमेण विहरन् गुरुः । श्रीमल्लं सेवकोऽवादीदिति गत्वाऽग्रतस्ततः॥५४॥

---

स्वभावविधाने अविरागो दर्शितः । मनोरथपूरणेन च मयि सेवके परमं प्रेम बिभर्तु धरतु ।

४१–सन्देशवाक् तु वाचिकं इति हैमः । सन्देसओ इति भाषा । इतीति किं तदाह–

४२–अत्र ब्रूयाः देयाः इति च क्रियापदद्वयं पूर्वार्धेस्थितं उत्तरार्धेऽपि योज्यं । पृच्छेश्च कुशलं तथा–इति पदं गुरोः सर्वसङ्घस्य इत्युभयत्रापि योज्यम् ।

४४–भो वदेः भो इति सम्बोधनपदं तेन भो सेवक वदेः कथयेः । किं वदे इत्याह ।

४५–श्रीभिर्मदो हर्षो यस्य स श्रीमदः । यद्वा श्रीणां मदो हर्षो अविनाशित्वात् यस्मिन् सः श्रीमदः । अहम्मदावादस्य सङ्घः अहम्मदावादसङ्घः अथवा अहम्मदावादवासी: सङ्घः अहम्मदावादसङ्घःमध्यपदलोपी समासः । श्रीमदश्चासावहम्मदावादसङ्घश्च इति द्वाभ्यां कर्मधारये श्रीमदहम्मदावादसङ्घस्तं । कथं भूतं । उत्प्रेक्ष्यते श्रियां सम्पदां सङ्घमिव समूह मिव ।

४७–सः श्रीमल्लः । पतिप्रियः स्वमिप्रियः ।

५२–तस्य श्रीमल्लस्य स्वेष्ट सिद्धया स्ववाञ्छितनिष्पत्त्या तुष्यतीति स्वेष्टसिद्धितुट् । यदि पूज्यः स्तम्भतीर्थे न यास्यति तर्हि श्रीमल्लः श्रावको रोषं करिष्यति । पदमहोत्सवविधानं विना च तद्वाञ्छितं न सेत्स्यतीति अतोऽवश्यं श्रीपूज्येन स्तम्भतीर्थे गन्तव्यं पदमहोत्सवविधानलक्षणा तन्मनोरथसिद्धिश्च कर्तव्येति चतुर्थपदाभिप्रायः ।

स्तम्भतीर्थपुराभ्यर्णे [illegible]गुरुर्गुरुः । भवदाहूत आ[illegible]तसम्पन्निचयनिश्चयः ॥५५॥
पश्यंस्तदागमाध्वानं प्रतिक्षणं क्षणान्वितः । श्रुत्वा तदागमं चित्ते सोऽतुष्यत् सेवकोदितम् ॥
श्रीमल्लः श्रावकोऽभ्यायान्महाजनसमन्वितः । स्तम्भतीर्थान्तरा नेतुं वन्दितुं [illegible]॥५७॥
[illegible]न्तकमभ्येत्य प्राणमत्तत्पदाम्बुजम् । सत्रिःप्रदक्षिणीकृत्य रूप्यनीराजनां व्यधात् ॥
वाद्यमानघनातोद्यैर्गीयमानसुगानकैः । नृत्यन्नर्तकसंघातैः पश्यच्छस्यजनव्रजैः ॥५९॥
स्तम्भतीर्थपुरस्यान्तरुपाश्रयप्रवेशनम् । उत्सवैः श्रीगुरुः प्राप ततः श्रीमल्लनिर्मितैः ॥६०॥
इति धर्माशिषं पूज्यः सङ्घसन्तोषपोषिकाम् । सुधासदृशया वाण्या सङ्घाय समुपादिशत् ॥
धर्मो वो मङ्गलं कुर्याद्दानशीलाद्यनेकधा । तनौ धने तनूजादिकुटुम्बे भविकाः सदा ॥६२॥
धर्माशिषमिमां श्रुत्वा श्रावकाः प्रीतचेतसः । रूप[illegible]श्च चक्रुर्लम्भनिकां मिथः ॥६३॥
अथ मण्डपमुत्कृष्टमिष्टं मण्डयति स्म सः । नेत्राणां प्रथमो न्दणामुत्सवो दर्शनोचितः ॥६४॥
तत्र वस्त्रवृत्तिर्भित्तिर्दृढाऽविज्ञातसन्धिका । विचित्रैश्चित्रिता चित्रैर्नैतादृक्कृतपूर्विणी ॥ ६५ ॥
कुत्रचित्तत्र चित्राणि द्वन्द्वानि विविधानि हि । नानुस्थानमवाप्स्यामः प्रागेवेति स्थितानि किम्॥
कुत्रचित्तत्र पद्मानि नराः क्रीडन्त्वितीच्छया । बभुर्वा क्वापि पुष्पाणि देवानर्चेत्वितीच्छया ॥

---

५५—आहूतः आकारितः । सम्पदां निचयः समूहः स एव तस्य वा निश्चयो येन सः । आहूतसम्पन्निचयनिश्चयः । अथवा आहूतानां धातूनामनेकार्थत्वात् सम्पन्नानां सम्पदां निचयस्य समूहस्य निश्चय इव आहूतसम्पन्निचयनिश्चयः । गुरुविशेषणमेतत् ।

५८—रूप्याणां रूपकानां रूपइया इति लोकभाषाप्रसिद्धानां नीराजना आरती निवच्छणां इति भाषाप्रसिद्धा रूप्यनीराजना ताम् ।

६०—ततः श्रीगुरुः स्तम्भतीर्थपुरस्यान्तर्मध्ये उपाश्रयप्रवेशनं प्रापकैरुत्सवैः किं० श्रीमल्लनिर्मितैः श्रीमल्लनाम्ना श्रावकेण कृतैः । शेषाणि चत्वारि विशेषणानि स्पष्टानि । गीतं गानं गेयं गीतिरित्यभिधानचिन्तामणिः ।

६५—तत्र मण्डपे पूर्वं कृता केनेति कृतपूर्विणी । सुपूसुपेति समासे सपूर्वाच्चेति निः ऋन्नेभ्यो ङीप् इति ङीप् ।

६६—द्वन्द्वं स्त्री पुरुषौ । अनुपश्चात् ।

६७—तत्र मण्डपवृत्तौ कुत्रचित् पद्मानि कमलानि बभुः शुशुभिरे । कया नराः क्रीडन्तु इतीच्छया इति वाञ्छया बभुर्वा शुशुभिरे इव । लोका अपि कस्मिंश्चिदुत्सवे क्रीडां कर्तुकामाः परमवेषादिना भान्ति । अस्मान् लात्वा च अन्येऽपि केचन क्रीडन्ति इति च वाञ्छन्ति । तथा पद्मान्यपि अत्यद्भुताकारैरशोभन्त। श्रीविद्याविजयं द्रष्टुं समागता नराः अस्मान् लात्वा क्रीडन्तु इति ववाञ्छुश्च । च पुनः । तत्र मण्डपवृत्तौ क्वापि पुष्पाणि कुन्दादीनि बभुः । कया ? नरा इति पूर्वार्धस्थितं

अशोभन्ततरां तत्र कुत्र।चद्बहु[illegible]ः । शश्वत्कारस्कराः साराः सहकारादयः किल ॥६८॥
तमेष्यन्ति नरा द्रष्टुं ये तेऽर्कातपदुःखिताः । मा भवन्तु निषीदन्तु च्छायास्विति स्थिता इव ॥
कुत्रचित्तत्र मातङ्गा[illegible]रङ्गाः करभा अपि । तिष्ठन्तु स्वामिनः श्रान्ता इति भक्त्या स्थिता इव ॥
तस्योपरि समाकृष्टमुत्कृष्टं व्यलसत् स्थुलम् । चतुर्दिग् झल्लरीयुक्तं वियुक्तं सर्वदूषणैः ॥७१॥
श्वेतमिव बहिः श्वेतं प्रत्यक्षश्वेतपर्वतम् । ब्रुवन्ति पण्डिता यत्तद् व्यद्योततत्तरां किल ॥७२॥
द्यावाभूम्योर्विचालस्थं विमानं कोऽपि कौतितम् । चित्रव्याजात्समायुक्तं सुपर्वत्वात् सुपर्वभिः॥
तत्रान्तर्यत्र [illegible] पुरुषाणां योषितामपि । तन्मिषात्तानि तं द्रष्टुं छन्ना देवा इवाबभुः ॥
सद्वर्णा इव सद्वर्णाः प्रस्तीर्णा लिखिता बुधैः । तस्याऽशोभन्त भूपट्टे नानाकारा बुधादराः ॥

---

पदमिहाप्यनुकृष्य व्याखेयं । ततो नरा देवान् अर्चन्तु इतीच्छया इति वाञ्छया बभुर्वा शुशुभिरे इव । अत्र वार्तालेशः पुष्पाणि हि इत्यचिन्तयन् यन्नराः श्रीविद्याविजयं द्रष्टुमायास्यन्ति तत्र च नन्दिमारोपयिष्यन्ति नन्दौ च देवप्रतिमा भविष्यन्ति तासां पूजार्थं तत्कालगृहीतपुष्पाणि विलोक्यन्ते। ततो वयं प्रागेव तत्र भवामश्चेत्तर्हि त अस्मान् ज्ञात्वा प्रतिमाः पूजयन्ति इति वाञ्छया पुष्पाणि बभुरिवेति कवेरुत्प्रेक्षा । वा इत्यव्ययमिवार्थे ।

६९—ननु माघमासे पद्महोत्सवोऽभूत् । माघस्य शिशिरर्तौ संभवात्कथं अर्कातपदुःखिता इति । ब्रूमः शिशिर्तौ अतिशीतत्वात् अर्कातपस्य सुखकारित्वेऽपि प्रायोदुःखकारित्वात् प्रभूतकालमासेवनेन दुःसहत्वात् । अर्कातपदुःखिता मा भवन्तु, छायासु निषीदन्तु इति सहकारादीनां विचारो न दुष्ट इति ।

७२—तत्स्थुलं व्यद्योततरां अतिशयेन व्यराजत । तदिति किं यत् स्थुलं प्रति पण्डिताः प्रत्यक्षश्वेतपर्वतं कैलासपर्वतं ब्रुवन्ति । कथंभूतं स्थुलं बहिः श्वेतं धवलं । किमिव ? श्वेतमिव रूप्यमिव । यथा रूप्यं श्वेतं भवेत्तथेदमपि बहिः श्वेतं । स्थुलस्य बहिः श्वेतत्वात् रूप्योत्प्रेक्षा कैलासपर्वतोत्प्रेक्षा च युक्ता ।

७३—कोऽपि अर्थात् कविः । तं मण्डपं द्यावाभूम्योराकाशपृथिव्योर्विचालस्थं मध्यस्थितं विमानं कैति कथयति नायं मण्डपः किन्तु विमानमिति । कथं ? चित्र व्याजात् । देवदेवीचित्रमिषात् सुपर्वभिर्देवैस्समायुक्तं सहितं कस्मात्सुपर्वत्वात् प्रधानमहोत्सवात् ।

७५—तस्य मण्डपस्य भूपट्टे सद्वर्णा इव प्रधानाक्षराणीव । सद्वर्णाः प्रधानास्तर[1] दलीचा प्रमुखाच्छादनवस्त्रविशेषा अशोभन्त । कथं भूताः सद्वर्णा बुधैश्चतुरनरैः फरास इत्यादि भाषा प्रसिद्धैः प्रस्तीर्णा विछाया इति भाषाप्रसिद्धाः । द्वितीयपक्षे—कथंभूताः सद्वर्णाः प्रधानाक्षराणि बुधैः पण्डितैः प्रस्तीर्णा विस्तारं प्राप्ताः । पुनः कथंभूताः ? लिखिता इव लिखिताः । द्वितीय-

अथ भोजनसामग्रीं कारयामास सोऽग्रिमाम् । सुधामिव सुरेन्द्राणां नराणामतिवल्लभाम् ॥

तत्रादौ मोदका[illegible] दिव्यान् खज्जकान् सज्जनोचितान् ।
कुण्डलीघृतपुरादीन् श्रीसंड्वैलादिमिश्रितान् ॥ ७७ ॥

एतानेव च कर्पूरकाश्मीरद्रव्यसंयुतान् । अन्यानपि महावीर्यान् बहुजातीनकारयत् ॥ ७८ ॥
ततो नानाविधानेकदेशेभ्यो व्यवहारिणः । श्रावकानाह्वयामास तेऽप्यागच्छन् समृद्धितः ॥
आनन्ददायिनं नन्दिं न कैश्चिदपि निन्दितम् । अथारोपयदानन्दात्स तदा सतदादृतः ॥८०॥
तस्योपरि चतुर्दिक्षु चतुरश्चतुरो जिनान् । स्थापयामास साक्षित्वे सर्वविघ्नोपशान्तये ॥८१॥
मण्डपेऽथ समागच्छदतुच्छोत्सवपूर्वकम् । विजयसेनसूरीन्द्रो विद्याविजयसंयुतः ॥८२॥
संभूय श्रावका लोकास्तथान्ये तं दिदृक्षवः । आसतान्तर्बहिश्चैव मण्डपस्य यदृच्छया ॥८३॥
षोडशस्य शतस्यास्मिन् सप्तपञ्चाशसंवति । वैशाखशुदि चतुर्थ्यां गीतगानादिपूर्वकम् ॥८४॥
सूरिमन्त्रमथो सूरिः प्रादात् पाणौ तदीयके । अश्रावयच्च तत्कर्णे दक्षिणे घुसृणार्चिते ॥८५॥
सूरिमन्त्रं प्रदायाथ सूरिरित्यब्रवीन्मुखात् । सूरिर्विजयदेवोऽयं सर्वसङ्घसमक्षकम् ॥८६॥
अर्हत्सिद्धसदाचार्योपाध्यायाः साधुसाधवः । कुर्युः सङ्घस्य कल्याणं पञ्चैते परमेष्ठिनः ॥८७॥
इत्याशीर्वच उत्कृष्[illegible]र्मसाधकम् । विजयदेवसूरीन्द्रस्ततः सङ्घस्य सद्गिरा ॥८८॥
श्रीमल्लः श्रावको हर्षात्ततो रूप्याणि सादरः । ददौ श्रावकसङ्घेभ्यो याचकेभ्योऽपि भावतः ॥
भोजनानि पुरोक्तानि मोदकादीन्यभोजयत् । आहूतानप्यनाहूतान् श्रावकान् स जनानपि ॥

---

पक्षे लिखिताः । पुनः कथं० ? नानाकारा विविधचित्राः । द्वितीयपक्षे विविधाकृतयः । पुनः कथं भूताः० ? बुधादराः बुधानां अर्थात् महर्द्धिकोत्तमलोकानां आदरो येषु ते । तथा महर्द्धिकोत्तमलोकयोग्या इत्यर्थः । द्वितीयपक्षे । पुन कथं० बुधैराद्रियन्ते इति बुधादराः ।

८०—तस्मिन् नन्दौ अर्थात् नन्दिरचनायाः करणे आदृताः आदरवन्तः नन्दिरचना करणप्रवीणा नरा इत्यर्थः । तदादृता सह तदादृतैर्वर्तते यः स सतदादृतः । नन्दिरचनाकरणप्रवीण नरसंयुत इत्यर्थः ।

८९—अत्र रूप्यशब्दो नाणकपर्यायः । यन्महेश्वरः—रूप्यं स्यादाहतस्वर्णरजतेऽरजतेऽपि चेति । यथा—मणिरूप्यादिविज्ञानं तद् विदां नानुमानिकमितिः ।

९०—स श्रीमल्लः श्रावकः श्रावकान् अपीति समुच्चये जनान् अर्थात् श्रावकेभ्योऽन्यान् लोकांश्च पुरोक्तानि मोदकादीनि भोजनानि अभोजयत् । कथंभूतान् श्रावकान् आहूतान् परदेशेभ्यः परनगरेभ्यो वा आकारितान् । पुनः कथं० अनाहूतान् अनाकारितान् परदेशापेक्षया परनगरापेक्षया वा स्वनगरनिवासिन इत्यर्थः । आहूतानिति विशेषणेन पत्तनराजधनासि-

निरवर्त्ततसत्कान्त एवं सूरिपदोत्सवः । न्यवर्तत च सर्वेषां सन्ततिर्दुरितांहसाम् ॥९१॥
ततः सर्वत्र सर्वत्र प्रावर्तत जयारवः । श्रीसूरेः श्रावकेशस्य श्रीमल्लस्य च निर्मलः ॥९२॥
श्रीमत्पत्तनसद्‌द्रङ्गे निरमाद् वन्दनोत्सवम् । सहस्रवीर आनन्दाद्यस्य द्रव्यव्ययाद् घनात्॥९३॥
षोडशस्य शतस्यास्मिन् अष्टपञ्चाशवत्सरे । षष्ठ्यां पौषस्य कृष्णायां गुरुवारे शुभावहे ॥९४॥
ततः शंखेश्वरं पार्श्वजिनं नन्तुं च जग्मतुः । गुरुशिष्यावलक्ष्येतां सल्लोकैर्विनयात्तदा ॥९५॥
मरुदेशनिवास्यत्र हेमराजश्च सङ्घपः । शत्रुञ्जये जिनान्नन्तुं गच्छंस्तावभ्यवन्दत ॥ ९६ ॥
समस्तमरुदेशादिदेशवासिजनान्वितः । स्वभुजोपार्जितद्रव्यव्ययं कुर्वन्ननेकधा ॥९७॥
बहवोऽत्राभवन् भव्याऽवदाताश्चोत्सवा नवाः । निर्मिताः श्रावकैर्वक्तुं तानलं नाऽलसो यतः ॥

इत्थं वासकुमार एष उदयी प्राक्पुण्यपुण्यार्जनात्,
श्रीमत्सूरिपदं क्रमादलभत प्राप्तैकसाम्राज्यकम् ।
श्रीश्रीवल्लभपाठकेन पठितं लभ्यं न पुण्यं विना,
श्रुत्वेति प्रवणा भवन्तु भविका धर्मे मनःशुद्धितः ॥९९॥

इति श्री श्रीवल्लभोपाध्याय विरचिते श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरि सूरिपदप्रदानवर्णनो नाम सप्तमः सर्गः ॥७॥

न्धुपुरश्रीमदहम्मदावादादिनगरनिवासिनः श्रावकाः । अनाहूतानिति विशेषणेन च श्रीस्तंभतीर्थ निवासिनः श्रावका इत्यर्थोऽवसेयः ।

९२–सर्वान् त्रायते इति सर्वत्रः सर्वरक्षकः। सूरिपदोत्सवे बन्दिलोकाः कारातः छोटिताः। चटकादयो जन्तवोऽपि पञ्जरादितः छोटिता इति सर्वत्र इतीदं विशेषणं पुष्टम् ।

९३–सहस्रवीरः पारिक्खगोत्रः ।

९५–पाश्चिमार्धव्याख्या । तदा तस्मिन्काले श्रीविजयसेनसूरि श्रीविजयदेवसूर्योः श्रीशङ्खेश्वरपार्श्वजिननमस्करणहेत श्रीशङ्खेश्वरनगरप्राप्तिसमये सल्लोकैः पण्डितलोकैर्विनयात् किंचिदुच्चावचभद्रासनोपवेशनात् गुरुशिष्यौ श्रीविजयसेनसूरिर्गुरुः श्रीविजयदेवसूरिःशिष्यः अलक्ष्येतामज्ञायेतामित्यर्थः ।

९८–अत्र श्रीशङ्खेश्वरनगरे मरुदेशनिवासी पिंपाडिग्रामवास्तव्यः साहश्रीताल्हासुतो हेमराजसंघपतिस्तौ श्रीविजयसेनसूरिश्रीविजयदेवसूरिकर्मतापन्नौ अभ्यवन्दत । शेषं सुगमम् ।

# अष्टमः सर्गः

अथैवं वर्तमानोऽसौ वर्धमानं दिने दिने । जिनशासनसाम्राज्यं भुनक्ति द्युतिमत्तरम् ॥१॥
अदीक्षत घनान् शिष्यान् प्रतिद्रङ्गमनेकधा । विजयदेवसूरीन्द्रो जिनधर्मोपदेशतः ॥२॥
धर्मोपदेशतो यस्य प्रतिबुद्धा भवन्ति हि । भव्यास्तीर्थङ्करस्येव श्राद्धाः सम्यक्त्वधारिणः ॥३॥
सर्वदा सर्वदा यस्य सफला धर्मदेशना । लोकानां कल्पवल्लीव निष्फला स्यात्कदापि न ॥४॥
अथ श्रीमेडताद्रङ्गे मण्डनो भूमिमण्डनम् । श्रीचोरबेडियागोत्रे समभूत् श्रावकोत्तमः ॥ ५ ॥
सुरताणः सुतस्तस्य प्रथमः प्रथमः कुले । द्वितीयो नाथ इत्याख्यः समभूत्समभूत्तमः ॥ ६ ॥
नाथस्यात्मरुहोऽभूवंस्त्रयो लोकत्रयोत्तमाः । केशवः श्रीकपूरश्च कमानामापि च क्रमात् ॥ ७ ॥
यथाक्रममवर्धन्त पाल्यमाना अहर्निशम् । मात्रा पित्रा तथान्यैश्च त इवात्ममनोरथाः ॥ ८ ॥
समये पितरौ तांश्च सर्वविद्या अपाठयन् । शीघ्रमध्यापकाभ्यर्णादपठंस्ते च ताः समाः ॥ ९ ॥
तनयानां विवाहाय सत्कन्या व्यवहारिणाम् । अयाचेतांतरां प्रेम्णा पितरावादरेण हि ॥
अस्मिन्नवसरे पुत्रौ द्वौ केशव–कपूरकौ । नोपयच्छावहे कन्ये अब्रूतामिति धर्मिणौ ॥ ११ ॥
संसारिणां हि संसारे स्यात् प्रियं पाणिपीडनम् ।
तत्तौ न्यषिध्यतां बालौ कस्माच्चिदपि कारणात् ॥ १२ ॥
संभावयाम ईदृक्षं तत्र मिथ्या न सर्वथा । कारणं स्तोकसंसार उपान्तसुकृतं पुनः ॥ १३ ॥
बहूक्तावपि तौ पित्रा मात्रा वान्यैर्निजैरपि । विवाहं नाभ्यमन्येतां स्तोकसंसारिणौ यतः ॥
दीक्षामेवाभ्यमन्येतां तदा तौ सुकृते रतौ । रतौ यत्र भवेत् यो यत् तदेवाङ्गीकरोति सः ॥१५॥
पितरौ च पितृव्यश्च सर्व एते त्रयस्ततः । उद्विग्ना भवतोऽभूवन् सम्यक् तत्प्रतिबोधिताः ॥१६॥
ततस्त ऊचिरे सर्वे संभूयेति परस्परम् । वयं च प्रव्रजिष्यामो यद्येतौ प्रव्रजिष्यतः ॥ १७ ॥

---

६–समस्यां सर्वस्यां भुवि उत्तमः समभूत्तमः । सर्वार्थस्य समशब्दस्य सर्वादिगणे पाठात् स्त्रीलिङ्गे सप्तम्येकवचने, सर्वनाम्नः स्याट् ह्रस्वश्चेति; स्याट् इत्यागमे आपश्च ह्रस्वे समस्यामिति रूपसिद्धिः ।

९–ताः सर्वविद्याः, कथंभूताः समा मनोरमाः । समं साध्वखिलं सदृक् इत्यनेकार्थः ।

१६–पितरौ नाथाभिधः पिता, नायकदेवी माता । पिता च माता च पितरौ । पितामात्रेति पितृशेषः । च पुनः पितृव्यः काकउ इति लोकभाषाप्रसिद्धः, सुरताण इति नामा एते त्रयः । कथंभूता एते त्रयः । ततो वीवाहानङ्गीकरणात् । ताभ्यां केशवकर्मचन्द्राभ्यां प्रतिबोधिताः । अयं संसारो दुःखदायी, विषोपमा विषया इति ज्ञापिता ये ते तत्प्रतिबोधिताः ।

अथास्मिन् समये शास्ति बलभद्रो महीपतिः । राज्यं श्रीमेडताद्रङ्गे भ्रातृगोपालसंयुतः ॥१८॥
सोऽशृणोत् लोकवार्त्तेति प्रव्रजन्ति हि षण्णराः ।
पिता माता त्रयः पुत्राः पितुर्भ्राता तथा महान् ॥ १९ ॥
गृहं गृहांश्च संत्यज्य प्रभूतानि धनानि च । स्वयंबुद्धा इव ज्ञानात् मिथोबुद्धा विवादतः ॥२०॥
रूपस्वभावलावण्यैरुत्तराः कुरवः किमु । नोत्तरे चापरे लोका यानाख्यान्तीति पण्डिताः ॥२१॥
बलभद्रमहीपालस्तदेत्याकर्ण्य विस्मितः । तान् समाकारयामास प्रविमुच्य निजं नरम् ॥२२॥
नृपप्रैष्यस्ततस्तेषां गृहे गत्वेत्युपादिशत् । हूयते बलभद्रोऽसौ युष्मान् भो षण्णरा द्रुतम् ॥

---

२०–गृहं मन्दिरं गृहान् परिणीतस्त्रीः स्त्रियं वा । परिणीतस्त्रीवाची गृहशब्दः पुंक्लीबलिङ्गः पुंस्ययं बहुवचनान्त एव । मिथः परस्परं बुद्धाः ज्ञातधर्माधर्मफलाः । एतौ अदृष्टाऽभुक्तभोगौ केशवकर्मचन्द्रनामानौ पुत्रौ बालकौ यदि प्रव्रजतस्तर्हि वयं भुक्तभोगाः संसारे कथं तिष्ठाम, न स्थास्याम इति कारणादेव मातृपितृपितृव्या यथाक्रमं मिथो बुद्धाः । कस्मात् ज्ञानात् । अत एव, पुनः कस्मात् विवादतः । कथंभूता एते उत्प्रेक्ष्यंते स्वयंबुद्धा इव ।

२१–पण्डिता यान् मातृपितृपितृव्यपुत्रान् षड् नरान् इति आख्यान्ति कथयन्ति । इतीति किं; कथंभूताः षण्नराः । किमु इत्यव्ययं विचारे । रूपस्वभावलावण्यैः करणभूतैः । उत्तराः कुरवः उत्तरकुरुक्षेत्रोत्पन्ना युगलिन इति विचारयन्ति । न अपरे अन्ये लोका उत्तरे उत्तरदेशोद्भवाः । यादृशाः रूपस्वभावलावण्यैः उत्तरकुरुक्षेत्रोत्पन्ना युगलिनः सुन्दरास्तथा एते षण्नराः अपि सुन्दराः, नान्ये उत्तरदेशोत्पन्ना लोका इत्यर्थः । उत्तराः कुरव इत्यत्र सत्यामपि न नाम्नीति निषेधकथनात् पूर्वापरेति सूत्रेण वैकल्पिको जसः शी न भवति । व्यवस्थेति कोऽर्थः । स्वाभिधेयापेक्षोऽवधिनियमो व्यवस्था । अस्यार्थः–स्वाभिधेयो दिग्देशकालस्वभावोऽर्थस्तमपेक्षते यः सः स्वाभिधेयापेक्षः । एवं विधो योऽवधिनियमः स व्यवस्था । तत उत्तरशब्दस्य दिग्देशकालस्वभावे अर्थे सत्यपि उत्तरशब्दात्पूर्वापरेति वैकल्पिको जसः शीभावानिषेधो नामत्वात् । ननु उत्तरशब्दस्य दिग्देशकालस्वभावानां नामत्वे सत्यपि न नाम्नीति कथं कथयतेति चेत् ब्रूमः–कुरवो द्विधा–मेरुपर्वतात् दक्षिणस्यां दिशि भवत्वात् देवकुरवः । देवशब्दपूर्वत्वेनैव प्रसिद्धत्वात् तेषां न दक्षिणशब्दपूर्वत्वेनेति उत्तरस्यां दिशि भवत्वात् । उत्तरशब्दपूर्वत्वेनैव प्रसिद्धत्वात् । उत्तराः कुरव इति कुरव इत्युक्तेश्च सामान्येन उभयोः देवकुरव उत्तरकुरव इत्यनयोर्ग्रहणं स्यात् । तत उत्तरशब्दस्य विशेषस्य द्योतकत्वात् उत्तरा इत्युक्तेरुत्तराः कुरव इति लभ्यते । अत उत्तरशब्दस्य कुरव इत्यस्य नामान्तरद्योतकत्वात् । नाम्नीति कथनं न दुष्टं । उत्तर इत्यत्र पूर्वापरेति वैकल्पिके जसः शीभावे प्रथमा बहुवचनं । नात्र प्रत्ययो न च तस्य लोपः । कुरव इत्यत्र जनपदे लुप् इति अण् प्रत्यय लुपि सति लुपियुक्त वद् व्यक्तिवचने इति प्रकृतिवत् लिङ्गवचने ज्ञेये ।

अलङ्कारैरलङ्कृत्य परिधायाम्बराणि च । प्रभूतं प्राभृतं लात्वा जग्मुस्ते तत्र षण् नराः ॥२४॥
प्राभृतं पुरतो मुक्त्वा निपत्य च पदाम्बुजम् । स्वोचितं स्थानमासाद्य तस्य ते तस्थुराज्ञया ॥
तान् निरीक्ष्य परीक्ष्याक्ष्णा दर्शनादेव तत्क्षणात् ।
शान्तात्मान इमे सत्या आसूध्वमित्यब्रवीन्नृपः ॥ २६ ॥
तानासीनानथाऽपृच्छद् बलभद्रस्तदादरात् । कथं गृह्णन्ति भो दीक्षां भवन्तस्तद् ब्रुवन्तु माम् ॥
किं दुःखं कस्य कस्माद्वा युष्माकं कश्च दुःखदः । निवारयाणि तत्सर्वं यद्वाञ्छत ददानि तत् ॥
यदि स्यान्न धनं पार्श्वे धनं तर्हि ददाम्यहम् । ग्रामं ग्रामोत्तमं चारीन् द्राग् निराकरवाणि च ॥
व्यापारं कुरुतां नन्दात् सुखेन वसतात्र च ।
दुःखतः पालनीया हि दीक्षा यत्कोमलाङ्गकाः ॥३०॥ चतुर्भिः कलापकम् ॥
इति श्रुत्वा नृपप्रोक्तं वचनं तेऽपि षण् नराः । तदोत्तरन्ति वाक्शूरा इव भूमीश्वरोत्तमम् ॥
कस्मात् कस्यापि वा दुःखं नास्माकं सर्वदा सुखम् । भवत्प्रसादतः सर्वं धनं चास्ति महीपते ॥
परं स्त्रीभिर्धनैः पुत्रैर्ग्रामैश्चान्यैर्गवादिभिः । नास्ति कार्यं सदास्माकं विना धर्मं हि सर्वदा ॥
एवं विबोध्य सद्बुद्ध्या धर्ममय्या च सद्गिरा । हर्षयन्ति स्म भूपालं षण् नरा धर्मतत्परा ॥
पुनः प्राहेति भूपालस्तदा तान् विनयान् मुदा । दीक्षां गृह्णन्तु भो वृद्धा, न गृह्णन्तु च बालकाः॥
प्राहुः श्रुत्वेति भूपालं ते सर्वे सर्ववल्लभाः । अस्माकं बालका एव दीक्षाग्रहणकारणम् ॥३६॥
एभिर्विना न चास्माकमेषां चास्मान् विना किल । सर्वथा नैव भूपाल दीक्षाग्रहणमर्हति ॥
एतत्साहाय्यतोऽस्माकमेषां साहाय्यतस्तु नः । दीक्षाग्रहणनिर्वाहो न संभवति सर्वथा ॥३८॥
उक्ति-प्रत्युक्ति-सद्युक्त्या विज्ञायेति महीपतिः । प्रसन्नीभूय तानाख्यत् यूयं धन्यतमा इति ॥
दृढधर्म-प्रियधर्म-शब्दौ शब्दानुशासने ।
नकारान्तौ हि निष्पन्नावर्थाच्चैतेषु षड् नृषु ॥ ४० ॥ युग्मम् ।
दृढधर्मादयः शब्दा इव प्राप्ता विशेषताम् । त्यक्त्वाऽकारान्ततां सूत्रात् पूर्वां प्रकृतिमात्मनः ॥

---

२५—ते षण् नराः तस्य बलभद्रमहीपालस्य आज्ञया तस्थुः—ऊर्ध्वा अभूवन् इत्यर्थः । तस्येति पदं अत्रापि योज्यं । किं कृत्वा, तस्य बलभद्रस्य पुरतोऽग्रतः प्राभृतं ढौकनं मुक्त्वा । पुनः किं कृत्वा, तस्य बलभद्रस्य राज्ञः पदाम्बुजं चरणकमलं निपत्य नत्वेत्यर्थः ।

४०—इति विज्ञाय । इतीति किं ? हि निश्चितं दृढधर्मप्रियधर्मशब्दौ नकारान्तौ शब्दानुशासने व्याकरणे निष्पन्नौ सिद्धौ; अर्थाच्च एतेषु षड्नृषु निष्पन्नौ । एते षड्नराः दृढधर्माणः प्रियधर्माण इत्यर्थः ।

नाश्रयन्ति गृहस्थत्वं मदुक्तं बहुशोऽपि हि ।

शुद्धधर्मबलादेते जातसद्वचनाक्षराः ॥४२॥ युग्मम् ।

ज्ञात्वैवं भूपतिर्धर्मे तान् विनिश्चिन्तचेतसः । प्रेषयामास सत्कृत्य गृहं सद्वस्तुभूषणैः ॥४३॥

अथायान्तिस्म ते तस्य हर्म्यादुत्सवतोऽद्भुतात् । बलभद्रमहीपालकृताद् हर्षप्रकर्षतः ॥४४॥

आगत्यावसथे नाथः सुरताणश्च सोदरः । दीक्षोत्सवसुसामग्रीं व्यदधातामुभौ मुदा ॥४५॥

वसन्त्यवसरे चास्मिन् मेदिनीतटपत्तने । (पाठान्तरेण–मेडतानाम्नि पत्तने)

तपागच्छे महीयांसः श्रावका व्यवहारिणः ॥४६॥

तद्यथा–कोठारीकुलविख्याताः कल्ला टालासुतान्वितः ।

अर्जनश्चासकर्णश्च रेखा अम्माभिधस्तथा ॥४७॥

वीरदासो लसद्वीरदासश्चामरसिंहयुक् ।

अन्येऽपि स्वपरीवारयुता आसन्महत्तराः ॥४८॥ युग्मम् ।

श्रीसूजा-हरदासश्च ताल्हणः पुण्यकारणम् । सादा-माना-दयश्चान्ये मन्त्रिणोऽमी बभुस्तराम् ॥

पदा-पत्ता-जिणामुख्या मुख्याः सर्वेषु कर्मसु । सोनीवंशे सदा ख्याता बभुवुः श्रावकोत्तमाः ॥

सहसा-सुरताणाख्यावास्तां कर्णाटवंशके । कुले भाण्डारिके भातां रत्ना–मोकाभिधानकौ ॥

श्रीमान् ठाकुरो नाम शङ्करः शङ्करः सदा । मानो नरहरश्चेते शङ्खलान्वय आबभुः ॥५२॥

---

४१-४२–दृढ इति व्याख्या०–एते षण् नराः नाथा १ सुरताण २ नायकदेवी ३ केशव ४ कर्मचंद्र ५ कपूरचन्दाः ६ गृहस्थत्वं नाश्रयन्ति न सेवन्ते । कथं० गृहस्थत्वं; हि निश्चितं बहुशः मदुक्तं बलभद्रेण राज्ञा उक्तं । कस्मान्नाश्रयन्ति शुद्धधर्मबलात् । कथं० एते जातसद्वचनाक्षराः–सत्सत्याद् वचनान्न क्षरन्ति न पतन्तीति सद्वचनाक्षराः। जाताश्चते सद्वचनाक्षराश्च जातसद्वचनाक्षराः । के इव उत्प्रेक्ष्यंते–दृढधर्मादयः शब्दा इव । यथा दृढधर्मादयः शब्दाः जातसद्वचनाक्षराः–जातं सत्सु सत्येषु वचनेषु प्रथमादीनां सप्तविभक्तीनां एकद्वित्वादिवचनेषु अक्षरं नकारादिलक्षणो वर्णो येषां ते जातसद्वचनाक्षराः । तथा एतेऽपि षड् नरा इत्यर्थः । कथंभूताः; दृढधर्मादयः शब्दाः विशेषतां विशेषभावं प्राप्ताः । किं कृत्वा ? आत्मनः स्वस्य पूर्वां अकारन्ततां प्रकृतिं सूत्रात् धर्मादच केवलात् इति लक्षणात्त्यक्त्वा । द्वितीयपक्षे कथं भूता एते विशेषतां प्राप्ताः सामान्यश्रावकलोकापेक्षया साधुधर्माङ्गीकारात् विशेषत्वं प्राप्ताः । किं कृत्वा पूर्वां प्रथमां प्रकृतिं श्रावकधर्मलक्षणां पापप्रकृतिं वा त्यक्त्वा । अत्र एते इति उपमेयपदं, दृढधर्मादयः शब्दा उपमानपदं; शुद्धधर्मबलादिति उपमेयपदं; सूत्रात् इति उपमानपदम् ।

४८–कोठारी । ४९–मुंहता । ५०–सोनी । ५१–भण्डारी ।

५२–सांखला । ५३–भडकतीया ।

रत्नसिंहो नृणां रत्नं राजसिंहो नृराजितः । सीहमल्ल-रता नाम प्रमुखा विदिता बभुः ॥५३॥
सदारङ्गः सदारङ्गो धनो धन्यो धनीश्वरः । सुरताण इमेऽभूवन् श्रीभडकतियान्वये ॥५४॥
सुरत्राणः कृतत्राणः टाहा हाहाविवर्जितः । त्रिलोकश्रीरमीपालः संचितीकुल आबभुः ॥५५॥
संघपः षेतसी ख्यातो मन्त्री नरबदस्तथा । रविदासो रवित्रासाः प्रतापादभवन्नमी ॥५६॥
द्रव्यदायी सदा देदा बंगाणी सद्गुणाग्रणीः । अभाच्छ्रीमत्तपानाम-सद्गच्छोद्द्योतकारकः ॥
भारमल्लः सदामल्ल-तुल्यो दानबलादिभिः । रविदासस्तथाऽभातामेतौ तातहडान्वये ॥५८॥
देवीदासा धनो नाम डूंगरो वत्सनामकः । अशोभन्त त्रयोऽप्येते सर्वदा सर्ववत्सलाः ॥५९॥
सुरत्राणः स्फुरत्प्राणः शार्दूलः स्थूलभूघनः । जीवाभिधस्तथेत्याद्या आसन् षीमसरान्वये ॥
भैरवो वर्धनो वीर एते भाण्डारिके कुले । व्यराजन्त च देपालः परीक्षककुलेऽभवत् ॥६१॥
महिकाभिध ऊदाह्वो मायीदासः सुमायिकः । इत्यादयो महीयांसो बभूवुर्गच्छदीपकाः ॥६२॥
अत्रत्यैरेभिरन्यैश्च परदेशागतैरपि । एतेषामचिकीर्ष्यन्त वरयात्रावरास्तिकैः ॥६३॥
अत्रान्तरे मृशन्नेवं षण् नरास्ते परस्परम् । श्रीमत्कपूरचन्द्रस्य दीक्षा योग्या न बाल्यतः॥६४॥
भवेत् कपूरचन्द्रो हि यावत्सप्ताब्दिकः किल । तावत्तिष्ठतु मातास्य पालनाय तदादरा ॥६५॥
प्रगृह्णातु ततो दीक्षां माता पुत्रेण संयुता । पालनीयास्ति कष्टेन दीक्षा यन्महतामपि ॥६६॥
विचार्यैवं तदा नाथो दीक्षाग्रहणतः खलु । निवार्यास्थापयत् पुत्रयुतां मातरमालये ॥६७॥
साप्यस्थात्पुत्रसंयुक्ता पुत्रपालनहेतवे । पत्युः कथनकारित्वं पत्न्या धर्मः सदोत्तमः ॥६८॥
कुर्वाणा परमं धर्मं श्रावकं व्रतिनीव हि । पत्न्यतिष्ठत् सुतं तस्य पालयन्ती च सद्व्रतम् ॥
केशवः कर्मचन्द्रश्च नाथस्यात्मरुहाविमौ । नाथः पिता तयोरेव पितृव्यः सुरताणकः ॥७०॥
चत्वारश्चतुरा एते कर्मारीन् हन्तुमुद्यताः । द्रव्यं दारांश्च संत्यज्य दीक्षायामभवन् पराः ॥७१॥

( चत्वारश्चतुरा एते दीक्षाग्रहणतत्पराः ।
बभूवुरल्पकर्माणः संत्यज्य स्वगृहांस्ततः ॥७१॥ इति पाठान्तरम् ) –युग्मम् ।

ते यच्छन् प्रत्यहं प्रातर्द्रविणं स्वगृहोचितम् । दीनेभ्यो याचकेभ्यश्च दिव्यधान्याम्बराणि च ॥
पूर्वोक्ता अथ ते श्रीमन्मेदिनीतटवासिनः । श्रावका भोजयन्ति स्म चतुरस्तान् घनादरात् ॥

---

५५–संचिन्ती त्रिलोकश्रीः तिलोकसी इति नामेत्यर्थः । हाहा सुरस्वरः ।

६५–तस्मिन् कपूरचन्दनाम्नः पुत्रस्य पालने आदरो यस्याः सा तदादरा ।

६९–तस्य नाथस्य पत्नी नायकदेवीनाम्नी । श्रावकस्यायं श्रावकः तं, तस्येदमित्यण् श्रावकसम्बन्धिनमित्यर्थः ।

७१–ततः नाकयदेव्या कपूरचन्दस्य च गृहे रक्षणानन्तरं स्वं च द्रव्यं गृहांश्च दारान् ।

नाथः श्रीसुरताणश्च वरयात्रामिमावथ । आत्मनोऽकारयेतां नो वैराग्याधिकता यतः ॥७४॥
अथ नाथोऽक्षिपत् पुत्रौ वर्णके सुदिने दिने । विचक्षण इवानन्दात् सुरेश्वरनरेश्वरौ ॥७५॥
आहृतौ चारुकौसुंभवस्त्रैस्तौ बभतुस्तराम् । प्रभातोदितबालार्ककिरणोपमसद्द्युती ॥७५॥
आनन्दात् गायतोल्लून् स्त्रियो वर्धयताहताः । मौक्तिकैरुपयच्छेते दीक्षाकन्यामिमौ यतः ॥
अनेके हर्षतो लोका इत्याचख्युर्विचक्षणाः । दक्षिणां ददतानन्दात् श्रुत्वा तत्कीर्तिमद्भुताम् ॥
काश्चित्सखीः प्रति प्रेम्णा काश्चिदाचख्युरित्यहो ।
मुक्त्वा कार्याणि तौ द्रष्टुं त्वरध्वं चेत साम्प्रतम् ॥७९॥
चारुकर्पूरकस्तूरीकुङ्कुमादिभिरद्भुताम् । स्फुरत्परिमलोपेतां कुरुध्वं शिष्टपिष्टिकाम् ॥८०॥
दिव्यगन्धोदकैः पूर्वं स्नपयन्तु ततः पुनः । उद्वर्तयन्तु तत्कायं यतध्वं चाक्षिदोषतः ॥ ८१ ॥
कर्पूरागरुकस्तूरीमिश्रकुङ्कुमचन्दनैः । अङ्गरागं तयोरङ्गे सरङ्गाः कुरुतादरात् ॥ ८२ ॥
ललाटे चारुचर्चिक्यं कुरुध्वं कुङ्कुमादिभिः । अङ्गेऽलङ्कारसद्धारान् परिधापयतोत्सवात् ॥८३॥
मल्लध्वं मूर्ध्नि माल्यानि गले प्रालम्बिकाः शुभाः । बहुधा च वराकारमङ्गुलीष्वङ्गुलीयकम् ॥
द्वयोर्मूर्ध्नि निबध्नीत कोटीरं च शिरोमणिम् ।
हस्तेषु हस्तसूत्राणि, बाहुभूषाश्च बाहुषु ॥८५॥ सप्तभिः कुलकम् ॥
पुष्पितौ तावदीप्येतां तदानीं फलितौ भृशम् । मनोरथप्रदातारौ कल्पवृक्षाविवाङ्गिनौ ॥८६॥
अभात्तद्द्वन्द्वमश्वस्थं वरयात्रासु राजवत् । भूषणैर्मुकुटोत्तंसैश्छत्रैश्च सह चामरैः ॥ ८७ ॥
गायना अग्रतो गायन् केप्यातोद्यान्यवादयन् । ननर्तुर्नर्तका हर्षादब्रुवन् कथकाः कथाः॥८८॥
स्फूर्जन्नेजसमाजश्रीकरकाकाररूपताम् । बिभ्राणाः किमु देवेन्द्रास्तौ निरीक्षितुमागताः॥८९॥

---

७८—उल्लुलुर्मङ्गलध्वनिरिति हैमशेषः । उपाद् यमः स्वीकरणे इति उपपूर्वात् यमो विवाहेऽर्थे आत्मनेपदे वर्तमाने लटो द्विवचने उपयच्छेते इति रूपं । तयोः **केशव—कर्मचन्द्रयोः** कीर्तिस्तत्कीर्तिस्ताम् ।

८१—उद्वर्तयन्तु मलं निवर्तयन्तु ऊगटणउ करउ इति भाषा इत्यर्थः ।

८३—चर्चिक्यं टीका आडिप्रमुखं । चर्चिक्यं समालभनं इति हैमः ।

८४—मल्लध्वं धरत । मल्लध्वमिति क्रियापदं सर्वत्र योज्यं । गले प्रालम्बिकाः काण्ठला १ लहकउ २ टंकावालि ३ चम्पकली ४ इत्यादि लोकभाषाप्रसिद्धाः आभरणविशेषाः । प्रालम्बिका कृता हेम्नेति । ऊर्मिका त्वङ्गुलीयकमित्युभयं हैमः ।

८८—केपीति वाद्यवादकाः । कथा इति तयोरेव बाल्येऽपि दीक्षाग्रहणलक्षणा वार्ता इत्यर्थः ।

वरयात्रा ययोरेवमासन्नवनवोत्सवाः। कथं व्याख्यान्ति तान् दक्षाः स्तोतुमिन्द्रो न यानलम् ॥
श्राद्धैर्निर्वाह्यमानानां विचित्राणां दिने दिने। तदीयवरयात्राणां वारानन्ये न लेभिरे ॥९१॥
श्राद्धानामतिबाहुल्यात् रागस्याधिक्यतस्तयोः।
सामीप्यात्सन्मुहूर्तस्य दिनानां च तनुत्वतः ॥९२॥ युग्मम् ॥
श्रीमन्मेदतटद्रङ्गाद् (पाठा०—श्रीमन्मेडताद्रङ्गाद्) बहिराराम उत्तमे।
दीक्षायै मण्डपं दीव्यं श्रीनाथः सममण्डयत् ॥९३॥
व्यराजत्तोरणैस्तुङ्गैर्मण्डपस्तत्र मण्डितः। तोरणीकृतसच्छुण्डैः सन्मुखीनैर्गजैरिव ॥९४॥
वातप्रेरितसच्छ्रेयस्कारिकारस्करच्छदैः। कर्णावलम्बितश्वेतस्फुरच्चञ्चुरचामरैः ॥ ९५ ॥
वस्त्रैस्तत्र सदुल्लोच आसील्लोचनहर्षदः। आकृष्टैर्नभसोदभ्रसन्ध्याभ्राणां दलैरिव ॥९६॥
सर्वतस्तत्र सन्मुक्तास्रजो रेजुः प्रलम्बिताः। कृत्वैकत्रांशुसर्वस्वं चन्द्रो न्यास्यकरोत् किमु ॥
अस्मिन् समभवन् काले यावंतोऽथमहाजनाः। निमन्त्र्य तावतः सर्वान् प्रचुरादरपूर्वकम् ॥९८॥
न सदंभोजनप्रीतं सभोजनमभोजयत्। ब्रुवन् यथोचितं भक्त्या खादत पिवतां क्रियाम् ॥
दीक्षायाः सुदिनस्यादौ दिनेऽदीनमना मुदा।
नालिकेराण्यदात् पाणौ तेषां च चरणोत्सुकः ॥१०१॥ त्रिभिर्विशेषकम् ।
अथ प्रभाते श्रीनाथः १ सुरताण २ सहोदरः। केशवः ३ कर्मचन्द्रश्च नाथपुत्रौ चतुर्नराः॥
कौसुम्भोष्णीषमुख्यानि वासांसि विविधानि हि।
हारप्रालम्बिकादीनि भूषणानि च पर्यधुः ॥१०२॥ युग्मम् ॥
अवतंसांस्तथा मौलीन् मौलौ तेऽतिमनोहरान्। न्यबध्नन्त नितान्तश्री शोभिता अच्युता इव ॥
निरक्रामंस्ततोऽगाराद् ग्रहीतुमनगारताम्। समारुह्य विमानश्रीभासुराः शिबिकाः शुभाः ॥

९२—तयोः केशव-कपूरचन्दयोः। इमाः तदीयाः, ताश्च ता वरयात्राश्च तदीयवरयात्रास्तासां तनुत्वतः अल्पत्वात्। स्तोकं क्षुल्लं तुच्छमल्पं दभ्राणुतलिनानि च। तनु क्षुद्र कृशमिति हैमः।

१०२—अथेत्यानन्तर्ये प्रभाते। चत्वारो नराः चतुर्नराः कर्तृपदं। हि निश्चितं। विविधानि, कौसुंभोष्णीषं कुसुम्भेन रक्तं उष्णीषं मुर्ध्ववेष्टनं पाघडी इति भाषाप्रसिद्धं मुख्यं येषु तानि कौसुंभोष्णीषमुख्यानि वासांसि वस्त्राणि पर्यधुः परिहितवन्तः। च पुनः हारप्रालम्बिकादीनि भूषणानि—अलङ्कारान् पर्यधुः। तत्र हाराश्च शतलता अष्टाधिकसहस्रलतादयो अनेकप्रकाराः। प्रालम्बिकाश्च काण्ठला १ लहकउ २ टङ्कावालि ३ माला ४ चम्पकली ५ चउकी ६ इत्यादि लोकभाषाप्रसिद्धविविधकण्ठाभरणविशेषा आदिर्येषां तानि हारप्रालम्बिकादीनि। चतुर्नराः के इत्याह—श्रीनाथः १ सुरताणः सहोदरो भ्राता, नाथस्य महीयान् भ्राता इत्यर्थः। केशवः कर्मचन्द्रश्च नाथपुत्रौ नाथस्य सुतौ। एते चत्वारो नरा इत्यर्थः।

लाम्बितानेकसं[illegible]लपुष्पमालासमा[illegible]लाः। किंकिणीकारणत्कारचञ्चुरारावचञ्चुराः ॥१०५॥
अद्य धन्या वयं लोका अप्येते [illegible]रवैः।
आरोहोत्पाटनादेषां कथयन्त्य इवेति किम् ॥१०६॥ त्रिभिर्विशेषकम्।
अनेके शिबिका लोकाश्चतस्रोऽभ्यवहंस्तदा। वृषस्कन्धैः स्वकस्कन्धैः सद्भक्त्या चोत्सवश्रिया॥
आरभ्य स्वगृहात्तेऽथ मध्ये मेदतटस्य हि। रूप्याणुल्लालयन्तोऽमी मार्गेषु निरगुस्तदा॥
गच्छन्ति स्माग्रतस्तेषां ब्रुवन्त इति मानवाः। जयतानन्दताजस्रं वर्धध्वं च लसच्छ्रिया॥
सङ्घा अपरदेशानां स्वदेशानां च भूरयः। धनिनो वसुधाधीशा मागधाद्याः परेऽपि च॥
मातङ्गाः पर्वतोत्तुङ्गा हयाः कल्लोलचञ्चलाः। स्यन्दनानि मनोज्ञानि सोत्साहाः पत्तयोऽपि च॥
उपर्युपरिसद्वस्त्रा वर्षासूच्चाभ्रका इव। स्फूर्जन्नेजाः पुरः पार्श्वप्रान्ते चाक्षिप्रमोददाः ॥११२॥
पताका नरहस्तस्था ज्ञापयन्त्य इवेति नून्। कृत्तवस्त्राक्षरन्यासैर्मिथो बुद्धाश्चतुर्नराः ॥११३॥
सचक्षुभिर्गवाक्षस्थाः सद्मोपर्युपरि स्त्रियः। पश्यन्ति स्म मिथश्चान्यान् लक्षयन्ति स्म पाणिभिः॥
भेरीदुन्दुभिमुख्यानि वाद्यानि विविधानि हि। वादकैर्वाद्यमानानि दिव्यानि स्वस्वजातिषु॥
अहङ्कारादिवानेके सङ्घाता वरयोषिताम्।
कर्णप्रियाणि गीतानि गायन्तो मधुरस्वरैः ॥११६॥ नवभिः कुलकम्।
दीक्षामहोत्सवं दिव्यं जातं प्राग् न कदेदृशम्। कृत्वा गच्छन् बहिर्द्रङ्गात् यत्र ते मण्डपं शुभम्॥
विजयसेनसूरीन्द्रसद्गुरोः प्रवराज्ञया। पाठकोत्तमदिव्यश्रीमेघविजयमण्डितम् ॥ ११८ ॥
अथशान्यां विदिश्येते गत्वा त्यक्त्वा स्वपाणिभिः। भूषाम्बराणि सर्वाणि कुर्युर्लोचं स्वमूर्द्धसु॥
साधुयोग्यानि दिव्यानि चीवराणि तदा मुदा। परिधाय गुरोः पार्श्वे आययुस्ते चतुर्नराः॥
ततः प्रदक्षिणीकृत्य प्रणत्य च चतुर्नराः। तस्थुरग्रे गुरोर्नन्दौ स्थापितान् चतुरोऽर्हतः॥१२१॥
यथाविधिविधिप्रज्ञो गुरुः सरसया गिरा। व्रतानि व्रतिनां पञ्च तदात्तानुदचारयत् ॥१२२॥
रसिका रसिकीभूय ते चाप्युदचरंस्तराम्। मुखैः स्वस्वमुखैः सम्यक् यतः सूत्रार्थवेदकाः॥
षोडशस्य शतस्यास्मिन्नेकपञ्चाशवत्सरे। माघश्वेतद्वितीयायां दीक्षैतेषां शुभाभवत् ॥१२४॥
तुतुषुस्ते तदात्यन्तमुच्चर्य व्रतपञ्चकम्। मेनिरे मनसा चैवमद्य धन्यतमा वयम् ॥ १२५ ॥
विजयसेनसूरीणां विनेयत्वाज्ञयात्मनः। प्रदीक्ष्य प्राचलच् शिष्यान् मेघविजयवाचकः ॥१२६॥
प्रतिग्रामं प्रतिद्रङ्गं विहरन् सह तच्छ्रिया। श्रीगृहाहम्मदावादद्रङ्गं स प्राप सोत्सवः ॥१२७॥

---

१०९—तपःश्रिया, यशःश्रिया।

१२४—एतेषां नाथ १ सुरताण २ केशव ३ कर्मचन्दानां।

१२७—तेषां चतुर्णां नवीनाशिष्याणां नाथ १ सुरताण २ केशव ३ कर्मचन्द ४ नाम्नां श्रीः शोभा तच्छ्रीः तया सह सार्धम्।

अभिवन्द्यानवद्यात्मा सोऽदाच्च शिष्यचतुष्टयम् । विजयसेनसूरीणां सद्गुरूणां गुणात्मनाम् ॥
श्रीनेमिविजयो १ मुख्यः श्रीसूरविजयो २ऽपरः ।
श्रीकीर्तिविजयो ३ ज्ञेयः कनकविजयो ४ जयी ॥१२९॥
चतुर्णामिति चत्वारि नामान्येषां यथाक्रमम् ।
विजयसेनसूरीन्द्रस्सत्यार्थानि व्यधात्तदा ॥१३०॥ युग्मम् ॥
श्रीनेमिविजयो नाम कनकविजयः पुनः । शिष्यावेतावुभौ सोऽदात् विजयदेवसूरये ॥१३१॥
कपूरचन्दनामानं भ्रातरं लघुमात्मनः । गते नायकदेव्याख्यां मातरं च कियत्क्षणे ॥१३२॥
षोडशस्य शतस्यात्र षट्पञ्चाशत्प्रवत्सरे । पूर्वैरिव महीयोभिरुत्सवैः श्रावकैः कृतैः ॥१३३॥
श्रीमन्मेदतटद्रङ्गे प्रादीक्षत् शुभे दिने । श्रीपूज्यस्याज्ञया श्रीमत्पद्मसागरपण्डितः ॥१३४॥
—त्रिभिर्विशेषकम् ॥
ततः कपूरचन्दाख्यं मात्रा संयुतमन्यदा । श्रीपूज्यायार्पयामास पद्मविजयपण्डितः ॥१३५॥
श्रीपूज्योऽप्यर्पयामास विजयदेवसूरये । कुंअरविजयेत्याख्यां कृत्वा शिष्यतया तदा ॥१३६॥
कुमियर्त्ति जिनागार-धर्मागाराय यः किल । कुंअरः प्रोच्यते सद्भिः सानुस्वारः स्वरे परे ॥
अनुस्वारो मकारस्य न कदापि स्वरे परे । अनुस्वारः कथं सूत्राभावादत्र स्वरे परे ॥१३८॥
उत्तरमाह—अनुस्वारो मकारस्याऽलुक् समासविधानतः ।
बाहुलकाच्च नामत्वादार्षत्वाच्च स्वरे परे ॥१३९॥
यथा तितउ शब्दे हि डउप्रत्ययशक्तितः ।
सन्धिर्नेह तथार्षोक्तेर्मकाराकारयोरपि ॥१४०॥ युग्मम् ॥
शत्रून् विजयते सर्वान सर्वत्रात्मीयतेजसा । विजयः प्रोच्यते प्राज्ञैः सर्वलोकसुखप्रदः ॥१४१॥
कुंअरविजयेत्याख्यामन्वर्थामकरोत्ततः । कपूरचन्दशिष्यस्य सद्गुरुर्गुरुवद्धिया ॥१४२॥

---

१२८—स श्रीमेघविजयवाचकः शिष्यचतुष्टयं नाथ १ सुरताण २ केशव ३ कर्मचन्दान् ४ इत्यर्थः ।

१३२—कियांश्चासौ क्षणश्च कियत्क्षणः । नाथ १ सुरताण २ केशव ३ कर्मचन्दानां ४ चतुर्णां संवत् १६५१ माघसुदि द्वितीयादिवसदीक्षाग्रहणात् कियत्कालस्तस्मिन् कियत्क्षणे गते श्रीमत्पद्मविजयपण्डितः श्रीपूज्यस्य आज्ञया—श्रीविजयसेनभट्टारकाज्ञया आत्मनः स्वीयस्य कीर्तिविजयकनकविजययोः कपूरचन्दनामानं लघुं भ्रातरं च पुनः नायकदेव्याख्यां मातरं शुभे दिने प्रादीक्षत । कियत्क्षणं द्रढयति कस्मिन् षोडशस्य शतस्य षट्पञ्चाशवत्सरे सं० १६५६ वर्षे इत्यर्थः । शेषं स्पष्टम् ।

एवं श्रीविजयादिसेनमुनिपो यस्मै सुशिष्यत्रयम्
प्रादाद् भक्तिवशप्रसन्नहृदयो यत् किं न दत्ते प्रभुः ।
सोऽव्याच्च श्रीविजयादिदेवसुगुरुर्भव्यानपायोच्चयाच्
श्रीश्रीवल्लभपाठकेन कविना व्याख्यात दीक्षोत्सवम् ॥१४२॥

इति श्रीश्रीवल्लभोपाध्यायविरचिते श्रीमद्विजयदेवमहात्म्यनाम्नि महाकाव्ये श्रीविजयदेव-सूरिवराणां श्रीविजयसेनसूरिप्रदत्तश्रीकनकविजयादिशिष्यप्रदानवर्णनो नाम अष्टमः सर्गः ॥ ८ ॥

# नवमः सर्गः

अथ शश्वद्गुरोः पार्श्वे सर्वा विद्याश्चतुर्दश । सोपाङ्गैकादशाङ्गीयुक् पूर्वाण्यपि चतुर्दश ॥१॥
अधीयानोऽभवज्ज्यायान्वर्धमानो गुणश्रिया ।
ओजसा तेजसा चाङ्गे कनकविजयोऽन्तिषत् ॥२॥ युग्मम् ॥
प्रत्यक्षा हि बभौ तस्मिन् चित्तस्थेव सरस्वती । सूत्रार्थाद्यवबोधेन कालेष्वध्ययनादिषु ॥३॥
शिष्यैरनेकैर्विद्वद्भिर्युक्तो यद्यपि भूरिभिः । तथाऽप्यनन्यशिष्योऽहमित्यमंस्त सदा गुरुः ॥४॥
चक्षुषी तस्य कर्णान्तविश्रान्ते स्तो मनोहरे । चक्षुष्मत्ता तु शास्त्रार्थैस्तथाऽप्यासीज्जगद्धिता ॥
विशावदाऽह्वयस्सोऽस्ति श्रीराजनगरे ह्यऽथ । विशावदाता उद्यन्ते विशदा यस्य धीमता ॥
शंसन्तीति विशो विश्वे विश्वे विश्वममूदृशम् । अश्नुते सद्यशो यस्य विश्वस्येष्टे स ईश्वरः॥७॥
विवस्वानिव तेजस्वी वचस्वीव बृहस्पतिः ।
यशस्वी चक्रवर्तीव जिनशा[illegible]कः ॥८॥ युग्मम् ॥
वशीति विवशो नेति शश्वच्चेति वशंवदः । यमुशन्ति विशामीशा भासते स विशावदः ॥९॥
उद्धृतेर्ज्जगतो मूलं मूलं स्वीयकुलस्य च । मूलो नाम तदीयोऽस्ति भ्राता त्राता सदर्थिनः ॥
अथात्रावसरे श्रीमद्विजयसेनसद्गुरुम् । विशावदाऽभिधः श्राद्धः समायाद्वन्दितुं मुदा ॥११॥
वन्दित्वा प्राञ्जलिर्भूत्वा विनयात् स उपाविशत् । पुरस्ताच्च श्रीगुरोर्धर्मकथां श्रोतुमनास्तदा ॥
विजयसेनसूरीन्द्र इति तं समुपादिशत् । नवीनप्रतिमानां हि कारणं पुण्यकारणम् ॥१३॥
समाकर्ण्येभयाकर्णि च ईदृग्गुरो[illegible]खात् । प्रतिमाकारणे भावमदधाच्च श्रीविशावदः ॥१४॥

---

८—स विशाविदा ईश्वरो धनी श्रावकः विश्वस्य जगत इष्टे ऐश्वर्यं करोतीत्यर्थः । अधीगर्थदयेशां कर्मणीति शेषत्वेन विवक्षिते कर्मणि विश्वस्येति षष्ठी । शेषत्वेनाऽविवक्षिते कर्माणि विश्वमीष्टे इति कर्मापि स्यात् । जगतामीष्टे जगन्तीष्टे इत्यादिवत् । स कः यस्य विशाविदा इति नाम्नः श्रावकस्य अमूदृशं सद्यशः विश्वं लोकमश्नुते इति । विश्वे सर्वेविशो मनुष्या विश्वे लोके शंसन्ति स्तुवन्ति कथयन्तीति यावत् । अमूदृशमिति किं तदेवाह—विवस्वानिव तेजस्वीत्यादि सर्वं स्पष्टं । एतत्सर्वमग्रतः स्पष्टयिष्यति ।

९—स विशाविदानाम श्रावको भासते दीप्यते । स कः यं विशामीशा मनुष्याणां स्वामिनो राजान इत्यर्थः । वशीति विवशो नष्टदुष्टधीर्नेति । च पुनः शश्वत् वशंवद इति उशन्ति वाञ्छन्ति कथयन्तीति यावत् । विवशोऽनिष्टदुष्टधीरिति हैमः ।

१०—सन्तः साधवः श्रावकादयः, अर्थिनश्च याचका ब्राह्मणादय इति समाहारद्वन्द्वे सदर्थिनस्तान् । न लोकाऽव्ययनिष्ठाखलर्थतृनामिति षष्ठीनिषेधे द्वितीयैव ।

उत्थाय तत आनन्दादागत्यास्थानमन्दिरम् । आकारयच्छुभेऽह्नि स्राक् प्रतिमाकारिणो नरान् ॥
तेऽप्याजग्मुस्तदाहूताः कृत्वा ज्योक्कारमादरात् । आसन्त पुरतस्तस्य तेनैवोक्तवराज्ञया ॥
तदैवं कथयामास तानर्हद्बिम्बकारिणः । द्वासप्ततिजिनेन्द्राणां कुर्वन्तु प्रतिमा वराः ॥१७॥
तदा तदाज्ञयैवं ते प्रतिमाकारिणो नराः । चक्रुरप्रतिमा अर्हत्प्रतिमाः प्रतिमोत्तमाः ॥१८॥
वर्तमानादिसत्कालत्रयसम्बन्धिनीरिमाः । द्वासप्ततिं जिनेन्द्राणां प्रतिमा महिमासमाः ॥
आदायानीय तस्याग्रे ढौकयामासुराशु ते ।
हृद्यमोदत ता दृष्ट्वा श्रावकश्रीविशावदाः ॥२०॥ युग्मम् ।
अकारयज्जिनागारं शकन्दरपुरे तदा । श्रीचिन्तामणिपार्श्वस्य चैत्यस्यान्तिकमुत्तमम् ॥२१॥
प्रतिमानामथ श्रेष्ठां प्रतिष्ठां श्रीप्रतिष्ठया । विजयसेनसूरीन्द्रकरात्कारयति स्म सः ॥२२॥
तस्मिन्नवसरे सूरिं विज्ञप्यांह्री प्रणम्य च । वदतांवर इत्याख्यत् श्रावकः श्रीविशावदः ॥२३॥
श्रीकीर्तिविजयाख्योऽयं कनकविजयोऽप्ययम् । शिष्यप्रशिष्यावेतौ ते भ्रातरौ द्वाविमौ मिथः ॥
राजसुन्दरनामाऽयं कुशलविजयः पुनः । कमलविजयश्चैते पञ्च पञ्चमपञ्चमाः ॥२५॥
एतेषां विदुषां देहि पदं पण्डितनामकम् । श्रीसंघाग्रहतः श्रीमद्विजयसेनसद्गुरो ! ॥२६॥
—त्रिभिर्विशेषकम् ।
विजयसेनसूरीन्द्रस्ततस्तस्याग्रहाद् घनात् । ददौ तेषां हृदानन्दि पदं पण्डितनामकम् ॥२७॥
रूपकाणि मुदा प्रादात् तत्पण्डितपदोत्सवे । साधर्मिकादिलोकानां प्रतिहस्तं विशावदाः ॥
अन्येऽपि श्रावका इभ्याः सभ्याः समयवेदिनः । धर्माभिलाषिणो रूप्यैश्चक्रुर्लम्भनिकां मिथः ॥
अहो पुण्यवतां पुंसां प्रभावः प्रभवत्यपि । मनोरथानां लाभाय परेषां ह्युपकारकृत् ॥३०॥

---

१९—कथं भूताः प्रतिमाः ? महिमासमाः—महिम्ना माहात्म्येन न समाः सदृशा यास्ता महिमाऽसमास्ताः ।

२५—पञ्चमेषु चतुरेषु पञ्चमा हृद्या ये ते पञ्चमपञ्चमाः । पञ्चमश्चतुरे हृद्ये इति महेश्वरः ।

२७—तेषां कीर्तिविजय १ कनकविजय २ राजसुन्दर ३ कुशलविजय ४ कमलविजयानां ५ पण्डितपदस्योत्सवः तत्पण्डितपदोत्सवस्तं । प्रतिहस्तमित्यत्र 'लक्षणे १ त्थंभूताख्यान २ भाग ३ वीप्सासु ४ प्रतिपर्यऽनव' इति लक्षणेऽर्थे प्रतियोगे हस्तमिति द्वितीया । प्रतिहस्तं हस्तं लक्षीकृत्येत्यर्थः । रूपकाणि नाणकानि । रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोरिति महेश्वरः । स्वार्थिके के रूपकम् ।

२९—रूप्यं दीनारप्रमुखनाणकं । रूप्यं स्यादाहतस्वर्णरजते रजतेऽपि चेति महेश्वरः । यथा—मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकमिति ।

३०—प्रभवत्यपि समर्थो भवत्येवेत्यर्थः । अपीति निश्चये । कथंभूतः प्रभावः हियस्मात्कारणात् उपकारकृत् ।

एवं विशारदाः श्राद्धः श्रद्धया धर्मकर्मसु । चकार रूपमेतेषां श्रीपण्डितपदोत्सवम् ॥३१॥
कनकविजयः प्राप्य श्रीपण्डितपदश्रियम् । विनयं लघुवृद्धेषु यथार्हंयुः सदाऽकरोत् ॥३२॥
एवमुद्भूतसद्भूतश्रीपण्डितपदर्द्धिमान् । कनकविजयोऽराजद्राजेव भविता ह्यसौ ॥ ३३ ॥

—श्रीकनकविजयस्य पण्डितपदम् ।

अथास्ति पत्तनं नाम पत्तनं पत्तनोत्तमम् । रत्नयोनिं यतो लोकास्तद्ब्रुवन्ति च नापरम् ॥
महेभ्या तत्र लालीति नाम्नी वसति कामिनी । श्राविका कामुका नैवं कामुक्यपि कदापि न ॥
शीलवत्यो हि या आसन् श्राविकाः सुलसादिकाः ।
तासामेषोऽवतारः किं जातैषा ब्रह्मचारिणी ॥३६॥
कुतोऽपि सुकृतात्कान्तात् प्राप्तसम्पत्ति-सन्ततिः। कुतोऽपि दुष्कृताद्दुष्टात् सा निष्पति-सुताऽभवत्॥
(कुतोऽपि दुरितात्सासीन्निष्पतिः सुपतिः श्रिया, श्रियां —इति वा पाठः ॥ ३८ ॥)
फलं लक्ष्म्यादिकं वल्गु फल्गु पत्यादिदुःखजम् । सद्धर्माऽधर्मयोर्बुद्ध्वा सार्हद्धर्मं समाचरत् ॥
अर्हदुक्तप्रकारेण विधिना शुद्धधर्मधीः । व्रतानि द्वादशाजस्रं श्रावकाणामपालयत् ॥४०॥
अथान्यदा फलं भूरि सा गुरोरशृणोन्मुखात् । शत्रुंजयादितीर्थानां यात्राकरणसंभवम् ॥४१॥
श्रुत्वोत्थाय गुरोरग्रे सर्वसंघसमक्षकम् । आकार्य सर्वदेशानां सङ्घान् सर्वात्मनोत्तमान् ॥४२॥
शत्रुञ्जयादितीर्थानां यात्रां कर्तास्मि भावतः ।
साऽवोचदिति सद्भक्त्या सिद्ध्यतामिदमीप्सितम् ॥४३॥ युग्मम् ।
श्रीसङ्घमुत्तमं कृत्वा श्रीसङ्घेन जनोत्तमा । उत्तमाहेऽकरोद्यात्रां शत्रुञ्जयमुखार्हताम् ॥४४॥

---

३४—पत्तनं नाम पत्तनं नगरं अस्ति। कीदृशं पत्तनं नाम पत्तनं पत्तनोत्तमं पत्तनेषु नगरेषु उत्तमं श्रेष्ठं पत्तनोत्तमं सर्वनगरोत्तममित्यर्थः । तदेवाह—यतो यस्मात्कारणाल्लोकास्तत्पत्तनं नाम पत्तनं रत्नयोनिं रत्नानामुत्पत्तिस्थानं रत्नखानिं ब्रुवन्ति । च पुनः अपरं अन्यद् नगरं रत्नयोनिं न ब्रुवन्ति ।

३५—कामुका मैथुनाभिलाषसहिता नैव । अत्र रिरंसाया अभावादेव जानपदकुण्डेति ङीष् निषेधे, अजाद्यतष्टाबिति टाप् अपीति पुनरर्थे। कामुक्यपि मैथुनेच्छावत्यपि कदापि कस्मिन्नपि काले न कामुकीत्यत्र जानपदकुण्डेति मैथुनेच्छायां ङीष् ।

३६—एषा लाली श्राविका। याः सुलसादिकाः श्राविकाः, हि निश्चितं शीलवत्य आसन् तासां । किमिति वितर्के । एष अवतारो जाता । कथंभूता एषा ब्रह्मचारिणी ।

४४—उत्तमं च तदहश्च उत्तमाहः शोभनं दिनमित्यर्थः। पुलिङ्गस्तस्मिन् उत्तमाहे । अह्नष्टखोरेवेति टप्रत्यये टिलोपे च उत्तमाहः। श्रीसङ्घेन लक्ष्मीसमूहेन जनोत्तमाः शत्रुञ्जयमुखाऽर्हतां मुखशब्दस्याद्यर्थत्वात् । शत्रुञ्जयगिरिनारशङ्खेश्वरार्बुदाचलादितीर्थङ्कराणाम् ।

शत्रुञ्जयादितीर्थानां यात्राश्चक्रे तयाऽद्भुताः । व्यययित्वाऽव्ययीभावो भेजे द्रव्येण तद्गृहे ॥४५॥
अथान्यदा समुत्पन्नगुरुरागा गुरौ गुणैः । क्षणदा क्षणदायां सा चित्त एवं व्यचारयत् ॥४६॥
एवमिति किं तदाह—
प्रातर्विज्ञपयान्येवं प्रणम्य चरणाम्बुजम् । विजयदेवसूरीन्द्रं सर्वसङ्घसमक्षकम् ॥ ४७ ॥
उपाध्यायपदं देहि त्वच्छिष्यस्याऽस्य भास्वतः ।

कनकविजयाख्यस्य तद्गुणैर्यत्तु शालिनः ॥ युग्मम् ।

जाते प्रभात आयात्सा सूरेः पार्श्वे उपाश्रये । रात्रिं चिन्तितसद्वार्तां नत्वेत्याख्यच्च सद्गिरा ॥
इतीति किं तदाह—
प्रयच्छ पूज्यराज त्वमुपाध्यायपदश्रियम् । कनकविजयाख्यस्य पूरयेति मदीहितम् ॥५०॥
अङ्गीकृत्य वचस्तस्यास्सूरिरेवमुपादिशत् । लालीस्त्वमसि धर्माली किं न कुर्वे त्वदीहितम् ॥
यतश्च—लाति लक्ष्म्याः फलं धर्मपुंरत्नं लीयतेऽपि च । उभयोर्वर्णयोर्योगे लालीरिति समासतः॥
तन्मनोरथसिद्ध्यर्थं तत्समक्षं निरैक्षत । मुहूर्तमुत्तमं सूरिरुपाध्यायपदोचितम् ॥ ५३ ॥
तत उत्थाय साप्यायात्स्वगृहे स्वगृहे श्रियः । तदैव सर्वदेशानां संघानाह्वयति स्म च ॥५४॥
संघा अहम्मदावादप्रमुखद्रङ्गवासिनः । उपरिष्टान्मुहूर्तस्य तदाहूताः समाययुः ॥ ५५ ॥
षोडशस्य शतस्याब्दे त्रिसप्ततितमे रमे । माघमासावदातस्य पक्षस्योत्तमवासरे ॥५६॥
वाद्यमानेषु वाद्येषु सुशब्देषु घनेषु च । गीयमानेषु गीतेषु सधवैर्युवतीजनैः ॥५७॥

---

४५—तया लाली नाम्न्या। किं कृत्वा ? व्ययायित्वा वित्तं समुत्सृज्य । व्ययण् वित्तसमुत्सर्गे चुरादि अदन्तः। द्रव्येण तद्गृहे लालीम्न्याः श्राविकाया गृहे अव्ययीभावोऽक्षयीभावो भेजे-शिश्रिये । प्रभूतेऽपि द्रव्ये तीर्थयात्रादिषु व्ययीकृतेऽपि तद्गृहे द्रव्याणि प्रभूतान्येवाभूवन्न न्यूनानीत्यर्थः ।

४८—हि यस्मात्कारणात्तु इति विशेषे । तस्य उपाध्यायपदस्य गुणाः तद्गुणास्तैस्तद्गुणैः शालिनः शोभनशीलस्य अनुपाध्यायोऽपि उपाध्यायपदयोग्यगुणैर्विशेषेण शोभमानस्येत्यर्थः ।

५२——लाति तच्छीला लाः, लीयते तच्छीला लीः । समासतः कर्मधारयसमासात् । उभयोर्वर्णयोर्योगे लाश्चासौ लीश्चेति लाली तत्सम्बोधनं हे लालि ! । ला आदाने अदादि परस्मैपदी, लीङ्च् श्लेषणे दिवादिरात्मनेपदी । उभयत्र अन्येभ्योऽपी दृश्यते इति क्विप् ।

५३—तन्मनोरथसिद्ध्यर्थं लालीश्राविकामनोरथसिद्धये । तत्समक्षं लालीश्राविकासमक्षम् । सूरिः श्रीविजयदेवसूरिः ।

५५—तदाहूता लालीश्राविकाकारिताः ।

विजयदेवसूरीन्द्रः कनकविजयाह्वयम् । उपाध्यायपदं दत्वा तदिदमवदन्मुखात् ॥ ५८ ॥
इदमिति किं तदाह— [ त्रिभिर्विशेषकम् ।
कनकविजयाख्योऽयमुपाध्यायशिरोमणिः । समक्षं सर्वसंघस्य नानादङ्गागतस्य हि ॥५९॥
निशम्येति ततः संघाः सर्वदेशनिवासिनः । ववन्दिर उपाध्यायकनकविजयाह्वयम् ॥६०॥
धर्माशिषं तदानन्दात् श्रीसङ्घस्य सुखावहाम् । उपादिशदुपाध्यायः कनकविजयाह्वयः ॥६१॥
तद्यथा—अर्हत्सिद्धवराचार्योपाध्यायाः साधुसंयुताः । श्वःश्रेयसं सदा कुर्युः पञ्चैते परमेष्ठिनः ॥
श्रुत्वोपदेशं ते सङ्घा उदतिष्ठंस्तदग्रतः । तेषां पाणौ च रूप्याणि ददौ लालीः स्वलीलया ॥
सर्वान्सङ्घांस्ततो लालीः प्रभोज्याद्भुतभोजनम् । विससर्जातिसत्कारपरिष्कारादिदानतः ॥
लाली श्राद्धी चकारैवमुपाध्यायपदोत्सवम् । कनकविजयो जीव्यात् स चिराय यदीयकम् ॥
—इति श्रीकनकविजयस्य उपाध्यायपदम् ॥
अथास्ति भरतक्षेत्रे सर्वस्वर्गसुखादिकम् । निर्वि[illegible]त्तेपुरमीडरसत्पुरम् ॥ ६६ ॥
कल्याणमल्लभूपालः सर्वकल्याणकारणम् । निरुपद्रवसाम्राज्यं भुनक्ति व्यक्तशक्तितः ॥६७॥
व्यवहारी सदाहारीश्वरेश्वरपुरस्कृतः । तत्र भावित्रभृद्गात्रः श्रेष्ठी वसति नाकरः ॥ ६८ ॥
( नाकरः श्रावकोऽवसत्—इति वा पाठः )
सद्दानादिगुणान् यस्य त्रिदशैः सहजूरपि । वक्तिरन्यो न किं वक्तिः सहजूरस्ति तत्सुतः ॥
( वक्तिरन्यस्य का वार्ता सहजूस्तत्सुतोऽभवत्—इति वा पाठः )
विगताजूः कदाप्याजूः कारायां नुर्न कस्यचित् । यस्य प्रभावतो लोके सहजूः स विराजते ॥

६४—अतिसत्कारेण परिष्कारादीनामलङ्कारादीनां दानं अतिसत्कारपरिष्कारदानं तस्माद्-तिसत्कारपरिष्कारादिदानतः । अलङ्कारस्तु भूषणं परिष्काराभरणे चेति हैमः । परिष्कार इत्ययं मूर्धन्यकवर्गाद्यमध्यः ।

६८—तत्र श्रीमति ईडरपुरे श्रेष्ठी नाकरो वसति । कथंभूतः? व्यवहारी । पुनः कथं० ? सदा निरन्तरं हारीश्वरेश्वरपुरस्कृतः—हारयो मनोहरा ये ईश्वरा धनिनस्तेषामीश्वराः स्वामिनस्तेषु पुरस्कृतो यस्स । तथा चारुहारिरुचिरं मनोहरमिति हैमः । पुनः कथंभूतः ? भावित्रभृद्गात्रः कल्याणयुक्तदेह इत्यर्थः ।

६९—तत्सुतः नाकरसुतः । जूराकाशसरस्वत्यां पिशाच्यां जवनेऽपिचेति महेश्वरः ।

७०—यस्य प्रभावतो लोके कदापि कदाचिन्नुर्नरस्य कारायां बन्दौ न आजूः न हठात्क्षेपः । कथंभूतः सहजूः? विगताजूः-विगता आजूःहठात्क्षेपो यस्मात्स विगताजूः । अनेन स्वेच्छाचारित्वं दर्शितम् । सहजूर्हि स्वेच्छयैव स्वस्यान्येषां च ऋणादानादिन्यायानां कार्येषु प्रवर्तते । परं नान्ये

दानैर्यस्य पराभूताः प्रसवद्भिः [illegible] । असूयया हि मातङ्गाः स्रवन्त्यद्यापि सप्तधा ॥७१॥
क्षिपन्ति मस्तके रेणून् सहन्ते [illegible] । लभन्ते नैव दातृत्वं सोऽभूद्दातृत्तमो भुवि ॥७२॥
अथायाद्विहरंस्तत्र विजयदेवसद्गुरुः । सहजूप्रमुखाः श्राद्धा अपि तं वन्दितुं गताः ॥ ७३ ॥
अभिवन्द्योत्सवं कृत्वाऽन्तरा नगरमानयन् । विजयदेवसूरीन्द्रं श्रावकास्त उपाश्रये ॥ ७४ ॥
(अभिवन्द्योत्सवं कृत्वाऽन्तरा नगरमानयत् । विजयदेवसूरीन्द्रं सहजूः स उपाश्रये-पाठान्तरम्)
धर्मोपदेशमाकर्ण्य नत्वा चोत्थाय सोऽकरोत् । पुष्पाणीव सुरूप्याणि महाजनकरास्पदे ॥७५॥
अथान्यदा समुत्पन्नविवेकाधिकतेरितः । इति व्यज्ञपयद्भक्त्या सहजूः श्रावको गुरुम् ॥७६॥
इतीति किं तदाह—
जानासि यं स्वं शिष्यं सर्वांगीणगुणाश्रयम् । श्रीगुरो प्रापयद्राक्तं वर्याचार्यपदश्रियम् ॥
[illegible]रीन्द्रस्ततः प्राहेति तं प्रति । अस्मिन् कार्ये करिष्यामि ध्यानमभ्युदयावहम् ॥७८॥
ततस्तं सहजूः प्राह प्रयतस्व गुरो द्रुतम् । ध्यानार्हं वीक्ष्यते वस्तु यत्तद् ब्रूहि नयामि तत् ॥७९॥
अस्मिन्नवसरे श्रीमत्सावलीग्राम उत्तमः । वर्तते सावली तस्य प्रबलीष्टे महीपतिः ॥८०॥
परीक्षककुलव्योमव्योमरत्नसमद्युतिः । पुंरत्नं रत्नसिंहाख्यः श्रेष्ठी वसति विश्रुतः ॥८१॥
अनेकजीवहिंसाया निवारणकृतोद्यमः । रत्नसिंहोऽलिखत्पत्रं सूर्याह्वानाय हर्षितः ॥८२॥
तद्यथा—स्वस्तिश्रीशोभितं शश्वन्नत्वा श्रीपरमेष्ठिनम् ।
ईडते पण्डिता यत्स्वस्तद्भातीडरसत्पुरम् (—पत्तनमिति वा पाठः) ॥८३॥
विजयदेवसूरीन्द्रं वसन्तं तत्र साम्प्रतम् । प्रणत्य रत्नसिंहोऽयं श्राद्धो विज्ञपयत्यथ ॥८४॥
श्रीपूज्यराज साधन्तश्रीसमाजविराजितः । सावलीग्राममागच्छ सर्वजीवहिताय हि ॥८५॥

---

तं हठात् तेषु प्रक्षिपन्तीति भावः । विष्टिराजूरित्य[illegible] । यद्यप्याजूर्नरके हठात् क्षेपस्य नाम, तथाप्यत्र सामान्याविशेषयोरभेदेन विवक्षणात् अन्यत्रापि हठात्क्षेप नाम न दुष्टम् ।

७१—सप्तधा सप्तभिः प्रकारैः ।

८०—सा सप्ताङ्गराज्यलक्ष्मीस्तया बलते प्राणितीत्येवं शीलः सावली । सप्ताङ्गराज्यलक्ष्मीसमृद्ध इत्यर्थः । बल प्राणने भ्वादिरात्मनेपदी । अत एव प्रबली प्रकृष्टं षड्विधत्वात् बलं सैन्यं प्रबलं तदस्यास्तीति प्रबली । अत इनि ठनौ इति । इनिः षड्विधसैन्ययुक्त इत्यर्थः । महीपतिः राजा तस्य सावलीग्राम्यस्य ईष्टे राज्यं करोतीत्यर्थः । तस्येत्यत्र अधिगर्थदयेशां कर्मणीति शेषत्वेन विवक्षिते कर्मणि षष्ठी । अत्र शेषो नाम कर्मण अविवक्षासम्बन्ध इत्यर्थः । ततः शेषस्य सम्बन्धस्य भावः शेषत्वं सम्बन्धत्वमित्यर्थः । तेन विवक्षिते कर्मणि षष्ठी ।

८५—साधन्वानां साधूनां श्रीः शोभा तस्याः समाजेन सङ्घातेन विराजितः साधन्तश्रीसमाजविराजितः ।

जीवहिंसा प्रभूतात्र जायते पापभूपतः । त्वदागमनतस्तस्या निवृत्तिर्भविता चिरम् ॥८६॥
अस्मिंश्च कार्य आलस्यमपास्यागच्छ सद्गुरो! । भवन्ति साधवः सर्वे धर्मलाभार्थिनो यतः ॥
स्वस्ति श्रीजिनमानम्य श्रीमदीडरसत्पुरे । सहजूप्रमुखान् श्राद्धान् रत्नसिंह इति स्तुते ॥
इतीति किं तदाह—
धन्या यूयं यतो नित्यं विजयदेवसद्गुरोः । वन्दध्वे चरणाम्भोजं लभध्वे च फलं श्रियः ।
वारंवारमिति स्तुत्वा तांश्च विज्ञपयत्यथ । अद्य सद्यः प्रसद्यात्र मुञ्चेयुः श्रीगुरुं गुरुम् ॥९०॥
अत्रापि भविता लाभो नव्यो नव्यो दिने दिने । प्रसादाद् भवतामेव विचारो नात्र कश्चन ॥
विलिख्य पत्रयोर्द्वन्द्वमद्वन्द्वेन स्वचेतसा ( –मद्वन्द्वेन स्वपाणिनेति वा पाठः ) ।
रत्नसिंहस्तदा प्रादात् प्रैष्यहस्ते प्रशस्तधीः ॥ ९२ ॥
तदानीं प्रोचलत्प्रैष्यः प्रचलंश्चापदीडरम् । गुरोरन्तिकमागच्छत्प्रादात्पत्रं च सद्गुरोः ॥९३॥
प्रापयच्छ्रीगुरुः पत्रं द्वितीयं सहजूकरे । उभाववाचयेतां तौ ते पत्रे प्रीतचेतसौ ॥९४॥
सहजूः प्रमुखाः सर्वे श्राद्धा ईडरवासिनः । विजयदेवसूरीन्द्रमिति व्यज्ञपयंस्तदा ॥९५॥
इतः प्रचल सूरीन्द्र गत्वा तं तत्र तोषय । धर्मैर्जीवदयादानब्रह्मचर्यादि सम्भवैः ॥९६॥
श्रावकं पोषयित्वा तं कृत्वा ध्यानं हिताय च । अत्रास्मांस्तोषयागत्य वर्याचार्यपदोत्सवात् ॥
इत्युक्तः सहजूमुख्यैः श्रावकैरादरात्ततः । विजयदेवसूरीन्द्रः प्राचालीत्परिवारयुक् ॥९८॥
विहरन्स क्रमात्प्राप सावलीग्राममुत्सवम् । कृत्वा श्रीरत्नसिंहोऽपि तमुपाश्रयमानयत् ॥९९॥
धर्मोपदेशमाकर्ण्य दृष्ट्वा चोग्रक्रियापरम् । श्रीगुरुं स्वशरीरे स प्रापानन्दमपापधीः ॥१००॥
यावच्छ्रीमद्गुरोरत्र स्थितिः प्रीतिविधायिनी । तावदत्रापवित्रा नो भवित्री मारिरीतिकृत्॥
वितथा वितथामे मा वाचो वाचंयमाधिपे । निवसत्यवनीनाथ रत्नसिंहोऽभ्यधादिति ॥१०२॥
सर्वथा निर्व्यथा लोका अभया अभया इव। भवितारोऽस्य माहात्म्यान्निर्धनाः सधना अपि ॥

---

८८–इति स्तुत इति स्तौति ।　　८९–धन्येति सुगमम् ।

१०२–युग्मम् । हे अवनीनाथ ! भूपाल ! वाचंयमाधिपे श्रीविजयदेवसूरौ निवसति सति स्थितिंकुर्वति सति इमाः पूर्वोक्ताः–मारिर्नो भवित्रीत्यादि लक्षणानि, वक्ष्यमाणाश्च सर्वथा निर्व्यथा लोका इत्यादिलक्षणा वाचो वाण्यः वितथा असत्याः मा वितथाः मा कार्षीः इति रत्नसिंहोऽभ्यधात् अकथयत् । वितथा इति तनुविस्तारे इत्यस्य विपूर्वकस्य करणार्थस्य माङ्लुङिति लुङि च्लिलुङि इति च्लिप्रत्ययः, च्लेः सिच् इति सिच् प्रत्यये तनादिभ्यस्तथा सोरिति वैकल्पिक-सिचो लोपे अनुदात्तोपदेशेति अनुनासिकलोपे न माङ् योगे इत्यनेन अडागमस्य लोपे च मध्यम-पुरुषस्यैकवचनम् ।

१०३–भवितारो भविष्यन्तीत्यर्थः ।

प्रबोध्यैवं स्वसद्बुद्ध्या सावलीग्रामनायकम् । मारिर्न्यवारि सर्वारिहरा तेन चिरत्नतः ॥
षोडशस्य शतस्याऽस्मिन् सुभिक्षे सुखदायिनि । अधिके सप्तभिः शस्तश्रीसप्ततितमेऽब्दके ॥
माघमासस्य शुक्लस्य पक्षस्य सुदिने दिने । षष्ठीनाम्नि विधातेव भाग्यं लिखितुमादरात् ॥
शासनाधीश्वरीं ध्यातुमथातिष्ठदधीश्वरः ।

गच्छभारधरः को मे भावी ज्ञातुमिति स्फुटम् ॥१०७॥ त्रिभिर्विशेषकम् ।
कृत्वा षष्ठाऽष्टमाऽचाम्लप्रभृत्यत्युत्कृष्टं तपः । ध्यायति स्म शुभं ध्यानं ध्यानकाग्रमना गुरुः॥
विधिना ध्यायतो ध्यानं प्रासीदच्छासनेश्वरी । समागत्य गुरोरग्रे न्यषीदद्वोज्ज्वलद्युतिः ॥
अथ शासनदेवतावर्णनम्—
प्रत्यक्षा सुप्रसन्नाऽक्षा देवी विद्युदिवाऽभवत् । सुवर्णात्मा सुवर्णात्मा श्रीगुरोः सम्पदे मुदे ॥
क्षोभयन्तीव चेतांसि योगिनां भोगिनामपि ।

अनाढ्यानां सदाढ्यानां त्यक्तात्यक्ताऽस्थिरत्वतः ॥१११॥

---

१०४—तेन रत्नसिंहेन तदा श्रीविजयदेवसूरेः सावलीग्रामे निवसनकाले चिरात् प्रभूतं कालं यावत् मारिर्न्यवारि न्यषेधीत्यर्थः । शेषं स्पष्टम् ।

११०—प्रत्यक्षा कर्हि दृष्टात्मेतिवा पाठः । देवी शासनदेवता सूरिमन्त्राधिष्ठात्री श्रीगुरोः श्रीविजयदेवसूरेः सम्पदे लक्ष्म्यै मुदे हर्षाय प्रत्यक्षा अभवत् । कथंभूता देवी? सुप्रसन्नाऽक्षा सुप्रसन्नानि विकाररहितत्वेन प्रसादवन्ति अक्षाणि इन्द्रियाणि यस्याः सा तथा। प्रत्यक्षा कर्हि दृष्टात्मेति पाठान्तरं तदायमर्थः—कथंभूता देवी कर्हि कस्मिन् अर्थात्समये दृष्टात्मा दृष्ट आत्मा देहो यस्याः सा तथा । शासनदेव्याः कस्मिन्नेव काले दर्शनात् न सर्वदा दर्शनात् । का इव ? विद्युदिव । कथंभूता विद्युत् ? कर्हि दृष्टात्मा प्राग्वत् । विद्युदपि कदैव दृश्यते न सर्वदेति । कथंभूता देवी विद्युच्च, सुवर्णात्मा सुवर्णः पीतलक्षणवर्णयुक्त आत्मा देहो यस्याः सा सुवर्णात्मा पीतवर्णा इत्यर्थः । अत एव पुनः कथंभूता, सुवर्णात्मा सुवर्णमयदेहा इत्यर्थः । पीता हि विद्युल्लोकानां सम्पदे भवति । यत्प्राच्यः—"वाताय कपिला विद्युत्, आतपायाऽतिलोहिनी । पीता वर्षाय विज्ञेया, दुर्भिक्षाय सिता भवेत्" इति । एवं शासनदेव्यपि पीतवर्णैव गच्छाभ्युदयाय श्रियै च भवति नापरवर्णेति विद्युता साम्यं दर्शितम् । एवं विशेषणद्वयमपि देवीविद्युतोः समानमेव ।

१११—किं कुर्वन्ती उत्प्रेक्ष्यते—योगिनां भोगिनामपि चेतांसि क्षोभयन्तीव क्षोभं प्रापयन्तीव । कथंभूतानां योगिनां? अनाढ्यानां धनरहितानां पूर्वं गृहस्थत्वे धनभोगसद्भावेऽपि सर्वथा परित्यक्तधनभोगानामित्यर्थः । कथंभूतानां भोगिनां ? सदाढ्यानां सर्वदा धनभोगसंयुक्तानामित्यर्थः । ननु कथं त्यक्तधनभोगानां योगिनां विद्यमानाऽपरित्यक्तधनभोगानां योगिनां चेतः

कर्णयोः कुण्डलव्याजात्सूर्याचन्द्रमसौ विधिः । अनीकस्थाविवाऽमुञ्चद्यस्या अङ्गस्य रक्षणे ॥
कर्णयोः कुण्डलव्याजात्सूर्या चन्द्रमसौ किमु । प्रतापकौमुदीवृद्ध्यै सेवेते इव यत्पदौ ॥११३॥
तदास्यदर्शनं शस्यं सदृक्षं स्यादहर्निशम् । सेवाविधायिनां पुंसां समीहितविधायकम् ॥११४॥
कर्णयोः कुण्डलव्याजात् सूर्याचन्द्रमसाविमौ । स्वामिनी मनसः प्रीत्या इत्यस्थातांतरामिव ॥
कर्णयोः कुण्डलव्याजात्सूर्याचन्द्रमसाविमौ । वृद्धिं द्रढयितुं सार्धं तयाप्तावागताविव ॥
कर्णयोः कुण्डलव्याजात् सूर्याचन्द्रमसौ तव । आवयोरिव तेजः स्तादिति वक्तुमिवागतौ ॥
शत्रुध्वान्तहरं मित्रकुमुदानन्ददायकम् ( –कुमुदोद्बोधकारकमिति वा पाठः ) ।
मिथ्यात्वाऽज्ञानसम्यक्त्वज्ञानवस्तुप्रकाशकम् ॥११८॥ युग्मम् ।
कर्णयोः कुण्डलव्याजात् सूर्याचन्द्रमसौ सदा । महामात्राविवाऽन्येषां स्वेशाऽग्राऽकूतवेदकौ॥
दधानाभाति सा कण्ठे हारप्रालम्बिकादिकाः । भूषा भूषा इवाधेयवराधारसुखावहाः ॥

---

क्षोभ इति शङ्कां निराकुर्वन्नाह–त्यक्ताऽत्यक्ताऽस्थिरत्वतः त्यक्तानां त्यक्तधनभोगानां योगिनां अत्यक्तानां अत्यक्तधनभोगानां भोगिनां अस्थिरत्वतः मनसः अस्थैर्यात् । संसारसहजत्वादत्रप्रेक्षेत्यर्थः । देव्या अत्यद्भुतरूपदर्शनेन तेषां मनसः स्थैर्येऽपि मनःक्षोभो अत्यधिकाद्भुतरूपत्वात् । एवं विद्युदपि व्याख्येया इति युग्मार्थः ।

११२–रीक्षवर्गस्त्वनीकस्थ इत्यमरः ।

११५–युग्मम् । अस्योक्तिलेशः–इमौ सूर्याचन्द्रमसौ कर्णयोः कुण्डलव्याजात् स्वामिनी मनसः प्रीत्यै सूरिमन्त्राधिष्ठात्र्याः शासनदेवतायाश्चेतसः प्रसन्नतायै इति अस्थातान्तरामिव प्रकर्षेण आतिष्ठतामिव । प्रकर्षेण अस्थातां अस्थातान्तरां द्विवचनविभज्योपपदेतरबीयसुनौ इति तरपि। किमेतिङव्ययघादाऽऽ स्वद्रव्यप्रकर्षे इति आम्वागमे रूपम् । इतीति किं तदाह–सेवाविधायिनां पुंसां अहर्निशं शस्यं तदास्यदर्शनं शासनदेवीमुखावलोकनं सदृक्षं समानं स्तात् । कोऽर्थः ? दिवारात्रावपि उद्द्योते ध्वान्ते च गृहस्य मध्ये बहिर्वा समानं शासनदेवीमुखावलोकनं भवतात् । एवं चेन्न तर्हि द्वयोर्मध्ये एकस्याभावे समानं दर्शनं न स्यादिति तद्भवतु इति अस्थाताम् ।

१२०–अस्योक्तिलेशः–सा शासनदेवता कण्ठे हारप्रालम्बिकादिकाः भूषा आभरणानि दधानाभाति । हाराश्च उरःसूत्रिका देवच्छन्द–इन्द्रच्छन्द–विजयच्छन्द–अष्टाधिकशतलताहारार्द्धहारादयोऽनेकप्रकाराः, प्रालम्बिकाश्च—कण्ठलउ लहकउ टङ्कावलि माला चंपकली चउकी इत्यादि भिन्नाभिन्नाकारानेकप्रकारलोकभाषाप्रसिद्धप्रलम्बमानकण्ठभूषास्ता आदिर्यासां ताः हारप्रालम्बिकादिकाः । कथंभूताः भूषाः ? आधेयवराधारसुखावहाः–आधेयाः हारप्रालम्बिकादिकानां भूषाणां स्वस्वसुन्दराकारज्योतज्ज्योतीरूपशोभनशोभालक्षणाः, वराधाराश्च

तस्याः शरीरमेवेद्रौ हारमौक्तिकदम्भतः । सुराः स्तनसुरद्रूणां क्रीडन्तीवोपरिस्थिताः॥१२१॥
तस्याः शरीरमेवेद्रौ हारमौक्तिकदम्भतः । सुराः स्तनासनासीनाः सेवन्ते सेवका इव ॥१२२॥
सिद्धिर्मनोरथानां स्रागस्माकं भविता शुभा । अस्याः प्रभावतो दिव्यादिति निश्चित्य चेतसि ॥
तस्याः शरीरमेवेद्रौ हारमौक्तिकदम्भतः । सुराः सूरिं नमामेत्यऽनया सह स्थिता इव ॥१२४॥
यत्सौवर्णाङ्गदम्भेन मेरुः सेवत एव ताम् । भवान्यदाता दाताहमिति चेतस इच्छया ॥१२५॥
त्यक्त्वैकेन्द्रियतां पञ्चेन्द्रियतां चेल्लभेयहि । तदा दानं प्रदायाहं प्रभवाणि बहुप्रदः ॥१२६॥
विचिन्त्येति यदीयाङ्गीभूयमेरुर्गिरीश्वरः । निषेवत इवाजस्रं सा देवी दीव्यते न कैः ॥ युग्मम्
कल्याणं नाम मे लोकाः आहुः सप्तसु धातुषु । शकुनादिषु कार्येषु मामकल्याणकं पुनः ॥
अतः सार्थं हि कल्याणं दधे नामेति वाञ्छया । तत्सुवर्णांगदंभात्तां सुवर्णं श्रयतीव किम् ॥
यत्सेवां सर्वदां पूर्वं सुवर्णं सर्वदा व्यधात् । सुवर्णमिति नामातो हेम्नस्तां स्तुत पण्डिता ! ॥
यस्याः स्तनद्वयं वीक्ष्य कविः कामप्रदं सदा । कामकुम्भमिहामुश्चदिव ब्रह्मेति शङ्कते ॥
विधत्ते न कथं सा हि पश्यतामीहितं नृणाम् । कामदं हृदि या धत्ते कामकुम्भं स्तनद्वयम् ॥

---

हारादीनामेव प्रवरधारकलक्षणाः, तेषां सुखावहाः सुखकारिण्य इत्यर्थः । पुनः कथंभूताः ? अत एव उत्प्रेक्ष्यन्ते भूषाः भूषा इव । भुवश्च भूमयः, उषाश्च रात्रय इति द्वन्द्वे भूषाः भूमिरात्रयस्ता इव । यथा भूमयो रात्रयश्च आधेयानां मनुष्यादीनां वराधाराणां च गृहादीनां शुभे सुखावहा भवन्ति तथा भूषा अपि स्वस्वसुन्दराकारशोभालक्षणानां आधेयानां वराधाराणां हारादिषु भूषाधारकानां च सुखावहा भवन्ति—इति भावः ।

१२५—एवेत्यव्ययमिवार्थे । मेरुर्यत्सौवर्णाङ्गदम्भेन यस्याः शासनदेव्याः सौवर्णाङ्गमेव सुवर्णमयशरीरमेव दम्भः कपटं तेन यत्सौवर्णाङ्गदेहेन करणभूतेन तां शासनदेवतां सेवते एव श्रयते इवेत्यर्थः । कया अहं अदाता दाता भवामि इति चेतस इच्छया ।

१२९—युग्मम् । उक्तिलेशः—सुवर्णं तां शासनदेवतां, तत्सुवर्णाङ्गदम्भात् तस्याः शासनदेव्याः सुवर्णाङ्गदम्भात् हेमवर्णमयशरीरमिषात् श्रयतीव सेवते इव । कया अतः कारणात्, हि निश्चितं सार्थं कल्याणं नाम दधे बिभराणि इति वाञ्छया, अतः कारणादिति । किं तदाह—लोकाः सप्तसु धातुषु मे मम कल्याणं नाम आहुः कथयन्ति । पुनः शकुनादिषु कार्येषु अकल्याणं अकल्याणकारकं आहुः । अतः कारणादित्युक्ति लेशः ।

१३०—उक्तिलेशश्चास्य—भो पण्डितास्तां शासनदेवतां स्तुत । तामिति कां ? यत्सेवां सुवर्णं हेम सर्वदा पूर्वं व्यधात् । अतो हेम्नः सुवर्णमिति नाम अभवदिति शेषः । यस्याः शासनदेव्याः सेवा यत्सेवा, तां; कथंभूतां सर्वदां सर्वाभीष्टार्थदायिनीमित्यर्थः ।

अन्यस्त्रीरूपसर्वस्वग्रासजयावधानतः । तस्या जयावहौ भात आनकाविव सुस्तनौ ॥१३३॥
जयस्तम्भाविव न्यस्तौ स्तनौ तस्या घनोन्नतौ । वीक्ष्यैवं पण्डिताः प्राहुः सर्वस्त्रीरूपलोपनात् ॥
देवीरूपं दधाना किं कामधेनुरियं किल । द्रष्टार इति शंसन्ति यतः कामदुघानया ॥१३५॥
सुरूपं चारुनेपथ्यं मनोमोहनयौवनम् । तस्या दृष्ट्वा जनाः स्वीयं किं त्यजन्ति न यौवनम् ॥
इन्द्रादयो हि ये देवा ऋद्धिमन्तस्तदीश्वराः । ते वशवर्तिनो यस्याः सा मोहयति किं न नॄन् ॥
यस्या अत्यद्भुता दृष्टिर्विकृता विकृतान्नरान् । निहन्त्यर्जुनयन्त्रेषुरिव सा रातु वाञ्छितम् ॥
गच्छन्ति सम्मुखं वीक्ष्य तां मर्त्या उन्नतस्तनीम् ।
त्यक्त्वा स्त्रीः पद्मिनीरुच्चगुच्छां वल्लीमिवाऽलिनः ॥१३९॥

---

१३६–द्वितीयं यौवनपदं युवतीवृन्दवाचकम् ।

१३८–सा शासनदेवता वाञ्छितं रातु–ददातु । सा का ? यस्या दृष्टिर्यस्या नेत्रं निहन्ति मारयति । कान् ? नरान् । कथंभूतान् ? विकृता द्वेषकामादिना विकारं प्राप्ताः शत्रवः कामिनो वा । अविकृता द्वेषकामादिना विकारं न प्राप्ता योगिन इत्यर्थः । ततः कर्मधारये विकृताविकृतास्तान् । कथंभूता दृष्टिरत्यद्भुता । का इव ? अर्जुनयन्त्रेषुरिव । यन्त्रेण मुक्ता इषुर्यन्त्रेषुः । मध्यपदलोपीसमासः । अर्जुनस्य यन्त्रेषु अर्जुनयन्त्रेषुः सा इव । यथा अर्जुनस्य यन्त्रेषुः शत्रून् हन्ति विफली न भवति तथा शासनदेवीदृष्टिरपि द्वेषकामादिना विकृतान्नरान्निहंति द्वेषकामादिनाऽविकृतान्नरान् ब्रह्मचर्यादिव्रतपालनधैर्यभ्रंशात् निहन्ति–नितरां हन्ति न विफली भवति । अत्र यस्या इत्युपमेयस्य अर्जुन इति भिन्नलिङ्गोपमानं 'क्वापि भिन्नलिङ्गं तु मेनिरे' इति वाग्भटवचनात् । दृष्टेरुपमानं यन्त्रेषुरिति । इषुशब्दः शरपर्यायः त्रिलिङ्गः शाकटायनमते, अमरस्तु इषुर्द्वयोरिति पुंस्त्रियोराह । अतोऽत्र स्त्रीलिङ्ग एव इषुशब्दो व्याख्येयः । चतुर्विधानि आयुधानि मुक्ताऽमुक्तादिभेदात् । यदाह हलायुधः–" मुक्तामुक्त–१ ममुक्तं २ करमुक्तं ३ यन्त्रमुक्तं च ४ ॥ शक्त्यादिपाणिमुक्तं स्यादमुक्तं क्षुरिकादिकम् । मुक्तामुक्तं च यष्ट्यादि यन्त्रमुक्तं शरादिकम् । " इति । अतोऽत्र यन्त्रेषुरिति धनुर्मुक्तबाण इति युक्तोऽर्थः ।

१३९–गच्छन्तीति व्याख्या:–मर्त्या नरास्तां शासनदेवतां वीक्ष्य सम्मुखं गच्छन्ति । कथंभूतां ताम् ? उन्नतस्तनीं–उन्नतौ उच्चौ स्तनौ यस्याः सा उन्नतस्तनी ताम् । स्वाङ्गाच्चोपसर्जनादसंयोगोपधादितिवैकल्पिको ङीष् । वैकल्पिकङीषाभावे उन्नतस्तनाम् । किं कृत्वा ? स्त्रीः अर्थात् स्वकीयपरिणीतस्त्रीस्त्यक्त्वा । अत्रोपमानमाह–कां के इव, वल्लीं अलिन इव भ्रमरा इव । यथा भ्रमरा वल्लीं सम्मुखं यान्ति तथा । इवोऽत्र भिन्नक्रमे, उद्बाहुरिव वामन इतिवत् । किं कृत्वा पद्मिनीस्त्यक्त्वा । कथंभूतां वल्लीम् ? उच्चगुच्छां–उच्चा गुच्छाः कुसुमानां यस्यां सा तथा ताम् ।

सौम्याच्चन्द्रो नु सूर्यो नु प्रतापान्नु सरोरुहम् । सौरभ्याद्वदनं तस्या इति प्रज्ञाश्चिराद्विदुः ॥
( सौरभ्यादागतौ तस्यास्तमितिज्ञाश्चिराद्विदुः–इत्यपि पाठान्तरम् )
देवा देवगुरूयन्ति यां सदा स्वप्रभावतः । दैत्या दैत्यगुरूयन्ति सा ददातु सदा मुदः ॥१४१॥
ईदृक् सा शासनधीशा तं तदेत्यवदन्मुदा । श्रीवल्लभ उपाध्याय उपश्लोकयति स्म याम् ॥
इतीति किं तदाह—
श्रीपूज्यराज कार्यं ते मदाकारणकारणम् । प्रसद्य तद्वद त्वं मां करवाणि त्वदाज्ञया ॥१४३॥
ध्यानं सूरिः परित्यज्य तामवोचद्विचारवित् ।
भूयांसः सन्ति मे शिष्याः अभिषिञ्चानि कं प्रति ॥१४४॥
श्रीसूरिणेति विज्ञप्ता सूरिमन्त्रस्य देवता । क्षणमात्रं तदा तस्थौ ध्याननिश्चललोचना ॥१४५॥
प्रणिधानेन साऽपश्यत् तपागच्छप्रकाशकम् । कनकविजयं शिष्यमुपाध्यायं जगज्जयम् ॥

---

यथा भ्रमराः कमलिनीभ्य उद्विग्नाः कमलिनीः परित्यज्य प्रोद्भूताऽतिसुराभिनवीनकुसुमगुच्छां लतां सम्मुखं यान्ति तथा रमणीयरूपा अपि स्वकीयपरिणीतस्त्रीः परित्यज्य मर्त्याः शासनदेवताम-भिमुखं यान्तीति भावार्थः । अत्र तामिति पदस्य वल्लीत्युपमानं, मर्त्या इत्यस्याऽलिन इत्युपमानं, स्त्रीरित्यस्य पद्मिनीरित्युपमानम् । स्त्रीरित्यत्र वाऽम्शसोरिति वैकल्पिको न इयङ् ।

१४०—तस्याः शासनदेव्या आगतौ आगमने ज्ञाः—पण्डिताः तां—शासनदेवतां इति चि-राद्विदुः ज्ञातवन्तः । इतीति किं ? त्रयोऽप्यत्र नु शब्दा अव्यया वितर्कार्थाः । सौम्यात्किं चन्द्रः? प्रतापात्किं सूर्यः? सौरभ्यात्किं सरोरुहं—कमलमिति । सौरभ्याद्वदनं तस्या इति प्रज्ञाश्चिराद्विदुरिति पाठे—तस्याः शासनदेव्या वदनं प्रज्ञाः पण्डिता इति चिराद्विदुः । शेषं सर्वं प्राग्वत् ।

१४१—सा पूर्वोक्तप्रकारवर्णिता शासनदेवता सदा मुदो ददातु । सा का ? यां सदा स्व-प्रभावत आत्मीयोत्कटत्वतः देवा देवगुरूयन्ति बृहस्पतिमिवाचरन्ति । यां दैत्या दैत्यगुरूयन्ति शुक्रमिवाचरन्ति । देवगुरूयन्ति दैत्यगुरूयन्ति—अत्रोभयत्र उपमानादाचारे इति क्यच्प्रत्ययः । अकृत्सार्वधातुकेति दीर्घश्च । सप्रतापः प्रभावश्च यत्तेजः कोशदण्डजमित्यमरः ।

१४२—द्वात्रिंशता श्लोकैरुपस्तौति—उपश्लोकयति । णाविष्टवत् प्रातिपदिकस्येति णौरूपं उपश्लोकयति स्म । द्वात्रिंशता श्लोकैरस्तौदित्यर्थः ।

१४४—अभिषिञ्चानि कं स्वपदे न्यस्यानि स्थापयानीत्यर्थः । अभिषिञ्चानीति 'आशिषि लिङ् लोटौ' इत्याशिषि लोटि, मेर्निरिति मेर्नि इत्यादेशे आडुत्तमस्य पिच्चेति आडागमे, उत्तम-पुरुषैकवचनम् ।

१४६—प्रणिधानेन समाधिना । प्रणिधानं प्रयत्ने स्यात्प्रवेशे च समाहिताविति—विश्वः ।

भावितात्माथ देवीति सूरीन्द्रं प्रत्यबोधयत् । कनकविजयः शिष्यो भविता ते गच्छनायकः ॥
अमूदृक्षोऽपरो दक्षो न विपक्षापनायकः ।
स्थूललक्षो लसत्पक्षो गुणलक्षोऽक्षदर्शकः ॥१४८॥ युग्मम् ।
विजयदेवसूरीन्द्रमित्यावेद्य न्यवर्तत । आज्ञया सूरिराजस्य ततः शासनदेवता ॥१४९॥
उज्ज्वलान्माघमासस्य दिनात्षष्ठादथाद्भुतात् । दिने वैशाखमासस्य तृतीये मञ्जुलोज्ज्वले॥१५०॥
शस्ते प्रभाते संजाते परदेशमहाजनाः । आगता वन्दितुं तत्र ज्योतीरूपं जगद्गुरुम् ॥१५१॥
रत्नसिंहादयोऽप्यन्ये सावलीग्रामवासिनः । विधायानेकधानेकान् ववन्दुस्तं महोत्सवात् ॥
रत्नसिंहस्तथान्येऽपि परदेशमहाजनाः । ददू रूप्याण्यनेकानि जातस्पर्द्धा बुधा इव ॥१५३॥
सहजूः समयेऽथास्मिन् कृतपूर्वलसद्वचाः । सुश्रीडरपुराद्वातुमसुश्चच्छ्रीगुरुं नरम् ॥१५४॥
ततः श्रीसहजूप्रैष्यः सावलीग्राममाययौ । ददौ च शिरसा नत्वा श्रीसूरेः करपङ्कजे ॥१५५॥
पत्रं प्रवाच्य सूरीन्द्रः स्वकाकारणवेदकम् । रत्नसिंहाभिधं श्राद्धं तदा प्राज्ञापयन्मुदा ॥१५६॥
सोऽप्यवादीत्तदा सूरिं तोषाय सहजूहृदः । गच्छ स्वच्छमते गच्छनाथ स्वहितमाचर ॥
प्राचालीत्परमप्रीत्या महताडम्बरेण च । श्रीसूरिर्भूरिभिः श्राद्धैः साधुभिश्च सह श्रिया ॥
श्रुत्वाथ सहजूः सूरिं सामायातं पुरान्तिके । श्रीसङ्घयुतोऽगच्छत् सम्मुखीनो नृणामिनः ॥
अभिनम्य निशम्योपदेशं च श्रीगुरूदितम् । सहजूर्हर्षितः सूरिं समानयदुपाश्रये ॥१६०॥
ददौ धर्माशिषं पूज्यः श्रीसंघाय विशेषतः । अभ्युत्तस्थौ ततः सङ्घः तस्मै रूप्याण्यदाच्च सः॥
क्षणं लब्धे कदेत्याह सहजूर्विनयाद्गुरुम्। श्रावकास्तव भूयांसः सन्त्यन्येऽपि महर्द्धिकाः ॥१६२॥

---

१४७—भावितो वासितो मिश्रितोऽर्थात् ज्ञानेनात्मा चित्तं यस्याः सा भावितात्मा । ज्ञातगच्छभारसारसूरिमन्त्राधारश्रीकनकविजयोपाध्यायेत्यर्थः।अथेति ज्ञाताऽनन्तरम्।'आत्मा चित्ते धृतौ यत्ने' इत्यनेकार्थः। स्थूललक्षो बहुप्रदः। यद् हैमः—'स्थूललक्षदानशौण्डौ बहुप्रदे' इति।'अक्षदर्शकः न्यायानां द्रष्टा, द्रष्टा तु व्यवहाराणां प्राड्विवाकोऽक्षदर्शकः' इति हैमः। 'विवादानुगतं पृष्ट्वा स सभ्यस्तत्प्रयत्नतः। विचारयति येनासौ प्राह विवाकस्ततः स्मृत'—इति कात्यायनः। लसन्तः पक्षाः सखायः सहाया वा यस्य स लसत्पक्षः। लसन् पक्षो बलं यस्येति वा लसत्पक्षः। यद्वा लसन्पक्षः साध्यं यस्य स तथा। अथवा अकारप्रश्लेषात् अलसत्पक्षः—न विद्यते लसन् पक्षो विरोधो यस्य सः अलसत्पक्षः। 'पक्षस्तु मासार्धे गृहसाध्ययोः। चुल्ली रन्ध्रे बले पार्श्वे सख्यौ-केशात्परश्रये। पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे' इति सर्वत्र हैमः।

१५४—कथंभूतः सहजूः कृतं विहितं पूर्वं प्रथमं लसद्विलसद्वचः श्रीकनकविजयोपाध्यायस्य आचार्यपददापनमहोत्सवविधानलक्षणं वचनं येन स कृतपूर्वलसद्वचाः।

१६१—स सहजूः श्रावक इति शेषः।

तेषामग्रेऽस्म्यहं सूरे सर्वदा किंमहर्द्धिकः। त्वदाज्ञाकारकः शश्वत्सेवकस्ते तथापि यत् ॥१६३॥
इति मे वाञ्छितं कर्तुं भव योग्यो मदाग्रहात्। कनकविजयायाऽत्र देह्याचार्यपदं मुदा ॥१६४॥
करवाणि यथालक्ष्मि वर्याचार्यपदोत्सवम्। फलं लक्ष्म्या लभे चाग्र्यमुत्पन्नायाः सुपुण्यतः ॥
—चतुर्भिः कलापकम्।

श्रीधर्मविजयो नाम महोपाध्याय उद्गतः। तपागच्छेऽर्कवद् व्याप्नि प्रामाणिकशिरोमणिः ॥
सुकृतानां शुभोपायः सद्गुणश्रीलयालयः। निर्व्यपाय उपाध्यायश्चारित्रविजयाह्वयः ॥१६७॥
तपःश्रीचारुलावण्यं लावण्यविजयोऽपि च। वृद्धोपाध्यायऋद्धायः शास्त्राध्यायपरायणः ॥
पण्डिताः पण्डितोत्कृष्टाः श्रीधनविजयादयः। रञ्जितास्तद्गुणैस्तेऽपि सूरिं विज्ञपयन्निति ॥
इतीति किं तदाह—
कनकविजयाख्येऽस्मिन् श्री[illegible]रिपदयोग्यता। अतः कुरु गुरुश्रेयः सहजूश्रावकोदितम् ॥१७०॥
ततः सूरिः प्रसन्नोऽभूत्तद्वचोऽङ्‌ग्यकरोच्च सत्। चारुभिश्चाटुभिः कष्कः सुप्रसन्नो भवेन्नहि ॥
सहजूरथ सन्तुष्टमनाः स्वगृहमागमत्। तदैवाचालयत्प्रैष्यानाह्वातुं श्रावकान् घनान् ॥१७२॥
श्रीमदहम्मदावादे स्तम्भतीर्थे च पत्तने। एवमादिषु सर्वेषु नगरेष्वपरेष्वपि ॥१७३॥ युग्मम्।
समाजग्मुस्तदाहूतास्तत्रत्यास्ते महाजनाः। उत्सुका वन्दितुं तं च द्रष्टुं सूरिपदोत्सवम् ॥
अमण्डयच्छुभे स्थाने मण्डपं कार्यपण्डितः। विचित्रचित्रसंयुक्तवस्त्रैर्नेत्रोत्सवप्रदम् ॥१७५॥
पञ्चवर्णात्मको मेघ इवाभाति स मण्डपः। विचित्रैः प्रचुरासारैः प्रवर्षन् हर्षयन् जनान् ॥
दुष्कालान् दुः[illegible] निरस्यन् दुस्सहान् भृशम्।
क्षोभयन् द्विषतां हृदि दारिद्र्याणि नृणां क्षणात् ॥१७७॥ युग्मम्।
पञ्चवर्णानि वस्त्राणि सुखमङ्ग[illegible] हि। भिन्नसन्ध्येकसन्धीनि यत्राभ्राणि विरेजिरे ॥
कुत्रचित् यत्र भान्ति स्म पीनकौशेयसंचयाः। विद्युताम्बरझात्कारा मध्यस्था निर्गता बहिः ॥
नयनानन्दिनं नन्दि मण्डपे सोऽभ्यमण्डयत्। शोभमानं चतुर्दिक्षु चतुरादिजिनादिभिः ॥

---

१६३—कुत्सितो महार्धिकः किंमहर्द्धिक अत्र किमित्यव्ययं निन्दार्थम्।

१६९—तद्गुणैः कनकविजयगुणैः।

१७४—तमिति श्रीविजयदेवसूरिम्।

१७५—कार्ये अर्थाद्धर्मकार्ये पण्डितः कार्यपण्डितः सहजूश्रावक इत्यर्थः।

१७७—मण्डपो जनाश्रयः पुंनपुंसकलिङ्गः। 'मण्डपोऽस्त्री जनाश्रय' इत्यमरः। 'आसारो वेगवान् वर्ष' इति हैमः।

१७८—यत्रेति मण्डपे मेघे च।            १७९—यत्रेति मण्डपे मेघे च।

कस्माच्चिदपि श्रुत्वेति समवसरणं भुवि । साक्षात्सुचतुरं सारं रचितं चतुरैर्नरैः ॥१८१॥
विलोकितुमिवायातस्तं नन्तुं चैव तज्जिनान् । विमानोऽयमिति प्राहुर्यं बुधाः सुरभासुरः ॥
उत्सवात्कृतशृङ्गाराः स्त्रियोऽथ सहजूगृहे । अजेगीयन्त गेयानि सर्वदोपाश्रयेऽपि च ॥१८३॥
वादित्राणि पवित्राणि बहुजातीन्यहर्दिवम् । सुस्वरस्वर्गभेत्तृणि वादका अभ्यवादयन् ॥१८४॥
अवदन् बन्दिनो लोका यशांसि वदनाम्बुजात् । गुरूणां श्रावकाणां च द्वारे द्वारे गृहे गृहे ॥
पुण्याहानि किलाहानि पुण्यरात्रीश्च रात्रयः । अभवन्नत्र सर्वत्र नागरा अब्रुवन्निति ॥१८६॥
एवमाविरभूद्रङ्गं प्रतिमन्दिरमुत्सवः । उत्सवः पुण्यवन्नृणां भवेल्लोकोत्सवाय यत् ॥१८७॥
श्रीद्व्यशीतितमे वर्षे षोडशस्य शतस्य हि । वैशाखशुक्लषष्ठेऽह्नि प्रातर्भास्वति भास्वति ॥
विजयदेवसूरीन्द्रो मण्डपं तं समासदत् । सोत्सवः साधुभिर्युक्तः कनकविजयादिभिः॥१८९॥
श्रावकैः श्राविकाभिश्च नागरैश्च जनैर्युतः । वीक्ष्यमाणो गुणैर्गीतैर्गीयमानः पदे पदे ॥१९०॥
त्रिभिर्विशेषकम् ।

ज्योक्कारमर्हतां नन्दौ कारयित्वा यथाविधि । कनकविजयाख्यस्य सूरिमन्त्रं श्रुतौ ददौ ॥
दत्वा सूरिपदं दत्तानन्दवृन्दो जगद्गुरुः । विजयसिंह आचार्य इति नामाभ्यधान्मुखात् ॥
( -इत्याख्यत् स्वमुखात् सुखात् -इति वा पाठः )

श्रीकीर्तिविजयाख्याय लावण्यविजयाय च । उपाध्यायपदं दत्वा सूरिरेवमभाषत ॥१९३॥
श्रीकीर्तिविजयाख्योऽयं लावण्यविजयो लघुः ( -लावण्यविजयः पुनः -इति वा पाठः )
उपाध्यायाविमौ गच्छप्रभावकतमौ समौ ॥१९४॥ युग्मम् ।

ततः श्रीसहजूनामा श्रावकः श्रद्धयाऽशृणोत् । विजयसिंहसूरीन्द्रप्रोक्तां धर्माशिषं सुखाम् ॥
सुखस्य प्राप्तये भूयात् सम्पदेऽभ्युदयाय च । जयाय च सदारीणां पञ्चैते परमेष्ठिनः ॥१९६॥
श्रुत्वेत्युत्थाय चोत्साहात् तान्नत्वा सहजूस्ततः । श्रीसङ्घानां समस्तानां करे रूप्याण्यदान्मुदा ॥

---

१८१-विलोकयितुं तमिति नन्दिं । विलोकयितुं युग्मस्य व्याख्या-बुधाः पण्डिता यं मण्डपं इति प्राहुः । इतीति किं ? चः पुनरर्थे । तज्जिनान् तस्मिन्नन्दौ जिना अर्थाज्जिनप्रतिमास्ता जिनास्तान् नन्तुं वन्दितुं आयात इव अयं विमानो व्योमयानं न तु मण्डप इत्यर्थः । 'व्योमयानं विमानोऽस्त्री' इत्यमरवचनात् । विमानशब्दस्य पुंनपुंसकलिङ्गत्वादत्र पुल्लिङ्गनिर्देशः । कथंभूतो विमानः ? सुरभासुरः सुरैर्देवैर्भासुरः सुरभासुरः । मण्डपे हि देवानां चित्राणि स्युरतो विमानस्यापि सुरसहितत्वं दर्शितम् । किं कृत्वा विमान आयात इत्याह-चतुरैर्नरैर्भुवि साक्षात् सारं समवसरणं रचितं इति कस्माच्चिदपि श्रुत्वा। समवसरणं हि सुरा एव रचयन्ति न नरा इति सुराणामाश्चर्यमतः सुररहितविमानागमनं समुचितं । कथंभूतं समवसरणं सुचतुरं शोभनाश्चत्वारोऽर्थात् जिना यस्मिंस्तत् सुचतुरं । अचतुरविचतुरसुचतुरेति अच् प्रत्ययनिपातात् सिद्धिः।

आहूय सर्वदेशानां श्रीसंघान् सोऽभ्यभोजयत् । सत्कारं चोत्तरं कृत्वा यथास्थानमचालयत् ॥
कनकविजयाख्यस्य जातः सूरिपदोत्सवः । जाते तस्मिन्ननेकेषां पुंसामासीन्महोत्सवः ॥१९९॥
विजयदेवसूरीन्द्रः कुर्वन्नवं महोत्सवान् । विजयसिंहसूरीन्द्रयुतो जयतु भूतले ॥२००॥
गुरुशिष्यावुभौ सूरी समासीनौ विराजताम् । श्रीतपागच्छपुंरूपनेत्रे इव विकस्वरे ।
( –नेत्रे इव मनोहरे –इति वा पाठः ) ॥२०१॥
गुरुशिष्यावुभौ सूरी समासीनौ विराजताम् । श्रीतपागच्छपुंरूप कर्णाविव विभूषकौ ॥२०२॥
गुरुशिष्यावुभौ सूरी समासीनौ विराजताम् । श्रीतपागच्छपुंरूपहस्ताविव तरस्विनौ॥२०३॥
वाञ्छितानां सुकार्याणां कारकौ स्वेच्छयाद्भुतम् ।
दानानां दायकौ वैरिवाराणां च निवारकौ ॥२०४॥ युग्मम् ।
एकस्तीर्थंकरो यत्र द्वितीयस्तत्र नो भवेत् । एतौ प्रीतौ मिथःसूरी भात इत्यद्भुतं जने ॥
एकस्मिन्नेव साम्राज्ये सम्राडप्येक एव हि । पुण्याधिकमिदं यत्तु सम्राजौ राजतो ह्यमू ॥
आसीनौ सम्मुखीनौ तौ सूर्याचन्द्रमसाविव । भातः प्राच्यां प्रतीच्यां च प्रातर्नेत्रसुखावहौ ॥
( –प्रभाते पूर्णिमास्थितौ –इति वा पाठः )
एवं तौ विहरन्तौ द्वौ गुरुशिष्यौ गणाधिपौ । पुष्पदन्ताविवोद्यातौ दीप्येते इव भूतले ॥
—इति श्रीविजयदेवसूरिशिष्यश्रीविजयसिंहसूरिवर्णनम् ।
अथास्मिन् समये क्षेत्रे भारते मरुमण्डले । श्रीमद् योधपुरं नाम पुरं पुरपुरोत्तमम् ॥२०९॥
यत्र वाप्यो घनाः कूपाः सरसानि सरांस्यपि । मनोऽभिरामा आरामाः सौवर्गेभ्योऽग्रिमाःसुखाः॥
महौजास्तत्र राजास्ति गजसिंहाभिधः सुधीः । पराक्रमपराभूतपरचक्रपराक्रमः ॥२११॥
सिलेमसाहिरानन्दात् पातिसाहिः प्रसन्नदृक् । महाराजा अयं हीति यं प्राहोत्तमराजसु ॥२१२॥
श्रीमानमरसिंहाख्यस्तस्य पुत्रो महर्धिकः । जयन्त इव शक्रस्य युवराजो विराजति ॥२१३॥
तत्र जेसाभिधः श्रेष्ठी श्रेष्ठोऽन्यव्यवहारिणाम् । राजमान्यो जगन्मान्यो न्यवसत्परमर्द्धिकः ॥
तस्य पुत्रास्त्रयोऽभूवंस्त्रयो वेदा इवोत्तमाः । सूरसिंहमहीपालमहामात्रा महौजसः ॥२१५॥
तेष्वाद्यो जसवन्ताख्यो जयराजो द्वितीयकः । तृतीयो जयमल्लाख्यो नामतोऽमी यथाक्रमम् ॥
आदिमौ त्रिषु नाऽभूतां पुरुषायुषजीविनौ । आयुषः क्षयतोऽभूतां स्वर्गिणौ स्वर्गविष्टपे ॥

---

२०१–समं सदृशं 'बराबर' इति भाषा । आसीनौ उपविष्टौ समासीनौ ।

२१०–सुखानीव आचरन्ति सुखंति । सर्वप्रातिपदिकेभ्यः क्विप् वाचारे–इति आचारेऽर्थे क्विपिप्रत्यये सर्वस्य क्विपो लोपे पचाद्यचि सुखन्तीति सुखाः सुखानीव आचरन्ति ।

२१७–पुरुषस्यायुः पुरुषायुषं अचतुरेति अजंतो निपातः । पुरुषायुषं जीवत इत्येवं शीलौ पुरुषायुषजीविनौ ।

अभूवन् जसवन्तस्य पुत्रा एते षडुत्तमाः । षण्मुखमुखाकारा विराजन्ते जयोदयाः ॥२१८॥
सामलः १ सुरताणश्च २, श्रीसहस्रमल्लो ३ ऽपि च ।
वर्धा ४ पाचा ५ तथा पत्ता ६ नामतश्च यथाक्रमम् ॥२१९॥ युग्मम् ।
अविषादः सदा सादाः शोभाः शोभाधनाश्रयः । जगस्तृतीय आभान्ति जयराजसुता अमी ॥
श्रीमज्जेसाभिधस्याथ तृतीयस्तनयोऽवति । मर्त्येषु जयमल्लोऽयं जयमल्लमतल्लिका ॥२२१॥
श्रीमन्नयनसिंहाख्यः सुन्दरः सुन्दरो नृणाम् ।
आसा नरहरः सन्ति जयमल्लसुता इमे ॥२२२॥
एभिः पुत्रैः शुभैर्दीप्तो भ्रातृव्यैश्च पुरोदितैः । युतोऽन्यपरिवारेण जयमल्लोऽत्र शोभते ॥२२३॥
राजसिंहमहाराजः प्रसन्नहृदयोऽन्यदा । श्रीसुवर्णगिरे राज्येऽभ्यषिञ्चज्जयमल्लकम् ॥२२४॥
तत्रान्यत्र ततो धात्र्यां सर्वत्र मरुमण्डले । एवं क्रमेण साम्राज्यश्रियमीष्टे स भाग्यवान् ॥
कुमारपालभूपाल इव स व्यलसत् श्रियः । दानेन जिनधर्मेण दययाऽद्भुतया भृशम् ॥२२६॥
श्रीमत्सुवर्णगिर्यादिद्रङ्गशत्रुञ्जयादिषु ।
चैत्योद्धारविधानेन यात्रया च प्रतिष्ठया ॥२२७॥ युग्मम् ।
एवमेतानि वाक्यानि कुर्वन् षडपि सम्प्रति । बोभुज्यते स साम्राज्यं जयमल्लश्च वर्तते ॥२२८॥
आह्वयज्जयमल्लोऽयं विवंदिषुरथाऽन्यदा । विजयदेवसूरीन्द्रं श्रीमदीडरपत्तनात् ॥२२९॥
विजयदेवसूरीन्द्रस्तदाहूतस्ततोऽचलत् । विजयसिंहसूरीशसंयुतः समहोत्सवः ॥२३०॥
विहरन्तौ क्रमात्सूरी गुरुशिष्यसुखप्रदौ । श्रीमच्छिवपुरीपार्श्वे समाजग्मतुरुत्सवात् ॥२३१॥
आसीदवसरेऽथास्मिन् पुंजा पुंजातिपुङ्गवः । प्राग्वाटान्वयसत्पद्मप्रकासनदिवाकरः ॥२३२॥
तेजपालः सुतस्तस्य सत्पुत्रैस्त्रिभिरन्वितः । वस्तुपाल-वर्धमान-धर्मदासैर्विलासिभिः ॥२३३॥
वसतिप्रिय ऋद्धीनां जनानां स्वामिनामपि । श्रीमच्छिवपुरीनाम्नि नगरे नगरोत्तरे ॥२३४॥
—त्रिभिर्विशेषकम् ।
अर्बुदाचलसत्तीर्थेऽभवत्प्रासादकारकः । श्रावको विमलो नाम विमलो विमलैर्गुणैः ॥२३५॥
चतुर्द्वारजिनागारकारको मारिवारकः । अभूद् राणपुरे ख्यातो धरणो धरणो नृणाम् ॥
इत्यादीनां प्रसिद्धानां श्राद्धानामतुलां तुलाम् । तेजपालो दधानोऽयं विधत्ते सुकृतं सदा ॥
—त्रिभिर्विशेषकम् ।
यस्य दानपराभूता जग्मुः कल्पद्रवो दिवि । तेजपालस्तु कल्पद्रुर्भाति वाञ्छितदो भुवि ॥२३८॥

---

२२५-तत्र सुवर्णगिरौ अन्यत्र स्थिराद्-सत्यपुरादिषु । ततस्तदनन्तरं धात्र्यां भूमौ सर्वत्र मरुमण्डले साम्राज्यश्रिय इत्यत्र अधीगर्थदयेशामिति केवलं सम्बन्धत्वेन विवक्षिते कर्मणि षष्ठी, सम्बन्धस्य अविवक्षयां; विवाक्षिते च कर्मणि द्वितीयाबहुवचनं वा ।

अथवा-जग्मुः कल्पद्रवः स्वर्गे लोकैः सन्तापिता भृशम्। तेजपालस्तु कल्पद्रुरेकोऽस्तीहितदायकः॥
अथवा-सर्वे कल्पद्रवो नेशुः भिन्नभिन्नेप्सितप्रदाः। तेजपालोऽस्ति कल्पद्रुरेकोऽनेकेप्सितप्रदः॥
अथवा-तेजपालस्य दानानि साधुयोग्यानि नो नहि। एकोऽनेकेप्सितप्राता तेजपालो वयं नहि॥
इति कल्पद्रुमाः सर्वे विमृश्य स्वहृदि स्वयम्। लज्जयेव गताः स्वर्गे लज्जितो याति यन्न किम्॥
ऊकेशवंशविख्यातो दौसिकान्वयदीपकः (अथवा-उपकेशाभिधे वंशे दोसीवंशप्रदीपकः)।
योधो भोजस्तथेत्याद्या वसन्तीभ्याः परेऽपि च ॥२४३॥
विजयदेवसूरीन्द्रस्तपागच्छाधिनायकः। श्रीमद्विजयसिंहाख्यसूरिसेवितपत्कजः ॥२४४॥
आगतः स्वागतं कुर्वन् जन्तुजातस्य सम्प्रति। रम्योपशिवपुर्यत्र तेजपालोऽशृणोदिति ॥२४५॥
तेजपालस्ततस्तुष्टा भूत्वा पुलकिताङ्गकः। कृत्वैकत्रोत्सवात्सङ्घं प्रास्थात्सूरिं विवंदिषुः ॥२४६॥
यत्र स्तस्तत्र तौ सूरी गत्वा नत्वा च भक्तितः। अग्रतो विनयादस्थाद्धर्मं श्रोतुंमना हि सः ॥२४७॥
शत्रुञ्जयार्बुदाद्र्यादितीर्थयात्रां हि ये नराः। कुर्वन्ति कारयन्त्यन्यान् लभन्ते ते नराः शिवम्॥
श्रुत्वोपदेशमीदृक्षं भट्टारकनिरूपितम्। तीर्थयात्राफलं ज्ञात्वा तेजपालोऽभ्यधादिति ॥२४९॥
अर्बुदाचलतीर्थस्थान् विधिनार्चिचिषाम्यहम्। विवन्दिषामि च श्रीमदादिदेवादिकार्हतः ॥२५०॥
भवता दीव्यताचार्यवर्योपाध्यायसाधुभिः। महता च श्रीसङ्घेन तथान्यैश्च समन्वितः ।२५१।युग्मम्
ओमाहेति ततः सूरिस्तेजपालाभिधास्तिकम्। इच्छाप्तौ स्याद्यतो हर्षः सोऽतोऽतोतुष्यतोत्तमः॥
( -सोऽतोऽतोतुष्यत प्रेयान् इच्छासिद्धिर्न किं मुदा-इति वा पाठः )
प्रत्यर्बुदाचलं तीर्थं तेजपालस्ततोऽचलत्। प्रत्यहं वन्दमानोऽमा समायान्तं गणाधिपम् ॥२५३॥
( -समायान्तं तपापतिम्-इति वा पाठः )
सुदिनाहे समारोहत् श्रीसूरिः श्रावकश्च सः। अर्बुदाचलसत्तीर्थमनत्तस्मिंश्चतीर्थपान् ॥२५४॥
द्रव्यतस्तेजपालोऽयं श्रीजिनेन्द्रानपूजयत्। कश्मीरजन्म-कर्पूर-कस्तूरी-चन्दनादिभिः॥
अभ्यष्टौद् भावतः सूरिः श्लोकैः काव्यैश्च भावदैः। यथामति यथाधीतमन्येऽपि व्यदधन् स्तुतिम्॥
द्रव्याण्यव्ययथेच्छ्रेयोबुद्ध्या तत्र स आस्तिकः। एकेन्द्रियादिजीवानां दयां सूरिरपालयत्॥
अदाद्रूप्याणि स श्राद्धः श्राद्धानां पाणिपङ्कजे। सूरिर्मूर्द्धसु साधूनां वासे श्रीपदद्वये ॥२५८॥
अर्बुदाचलसत्तीर्थयात्रायाः परमोत्सवः। प्रावर्ततोभयोरेवं सूरिश्रावकयोर्महान् ॥ २५९ ॥
तत उत्तीर्य संतीर्य दुरिताब्धिं च दुस्तरम्। अर्बुदाचलसत्तीर्थात् सुकृतात्सुकृतोडुपात् ॥२६०॥
विजयदेवसूरीन्द्रो विजयसिंहसूरियुक्। अस्थादुपत्यकाग्रामे तेजपालोऽपि संघयुक् ।२६१।युग्मम्

---

२४५-शिवपुर्याः समीपं उपशिवपुरि। विभक्तिसमीपेऽर्थेऽव्ययीभावः। रम्यं च तत् उपशिवपुरि च रम्योपशिवपुरि तस्मिन् रम्योपाशिवपुरि।

२५३-तपापतिं तपागच्छनायकं श्रीविजयदेवसूरिम्।

आदरं परमं कृत्वा सह लात्वा च सद्गुरुम् । सम्पद्वृन्दमिवानन्दं धृत्वा चित्ते च सोऽचलत् ॥
अथ प्रभाते संजाते दिवारत्ने प्रभावति । तेजपालो नृणां रत्नं सूरिरत्नं न्यवेशयत् ॥ २६३ ॥
श्रीमच्छिवपुरीमध्ये सुखाश्रय उपाश्रये । दत्वा रूप्याणि लोकेभ्यः कृत्वा च प्रवरोत्सवम् ॥
जायमानैः सदा धर्मैः क्रियमाणैः स्वतः शुभैः। कार्यमाणैश्च लोकेभ्यो नव्यैर्नव्यैर्दिने दिने ।२६५।
श्रीसूरीन्द्रश्चतुर्मासीं समाप्नोत्सुकृतोत्सवाम्। न च श्रीतेजपालस्य जिनधर्ममनोरथान्।२६६युग्मम्
चतुर्मासीं समाप्यैवं प्राचलत्प्राचलद्बलः। विजयदेवसूरीन्द्रः प्रमत्तो न यतो यतिः ॥ २६७ ॥
श्रीसुवर्णगिरिद्रङ्गात् प्रैष्यं प्रेष्य समाह्वयत्। जयमल्लस्तरोमल्लः श्रीसुवर्णगिरिप्रभुः ॥२६८॥
उपस्वर्णगिरिग्रामे श्रीसूरिः समवासरत्। लोकवार्तामिति श्रुत्वा जयमल्लोऽभ्यसंघयत् ॥२६९॥
अरसद् रसिकः सूरिपदाब्जस्पर्शसद्रसम्। मुखेनाऽलीव सन्मूर्ध्ना जयमल्लोऽग्रसंघयुक् ॥२७०॥
हृद्यानन्द्यानवद्येन विधिनैवाभिवन्द्य च। व्ययपित्वा च सल्लोके सह लात्वा च सद्गुरुम् ।२७१।
श्रीसुवर्णगिरिद्रङ्गे सरङ्गे सदुपाश्रये । समानीयाऽसयत् सिंहासने भूपमिवोत्तमम् ॥ २७२ ॥
ततः श्रुत्वोपदेशं च जयमल्लो जगज्जयी । महाजनकरे प्रादात् रूपकाणि महामनाः ॥२७३॥
—त्रिभिर्विशेषकम् ।

अथान्यदा च सूरीन्द्रं जयमल्लो न्यवेदयत्। प्रशस्यदिवसं पश्य प्रतिष्ठायोग्यमर्हतः ॥ २७४ ॥
ततः सूरीश्वरोऽपश्यज्ज्येष्ठमासे शुभं दिनम्। प्रतिष्ठायोग्यमारोग्यकरं सौभाग्यकारकम् ॥२७५॥
श्रावकं जयमल्लाख्यं सुवर्णगिरिनायकम् । सुवर्णगिरिसत्संघसमक्षं च न्यवेदयत् ॥२७६॥
ततः श्रीजयमल्लोऽपि देशदेशमहाजनान्। उपरिष्ठात्प्रतिष्ठायाः प्रैष्यान् प्रेष्य समाह्वयत् ॥२७७॥
आजग्मुस्तत्क्षणात्तेऽपि प्रतिष्ठां द्रष्टुमुद्यताः। वन्दितुं च तदा सूरिद्वयं पुण्याभिलाषिणः ॥२७८॥
( –द्वयं लाभद्वयस्पृहा –इति वा पाठः )

२६७—प्रकर्षेण अचलत् अविनश्यत् बलं मनोबलादित्रिकं यस्य प्राचलद्बलः ।

२६९—अभ्यसङ्घयत्—सङ्घेन साधुसाध्वीश्रावकश्राविकालक्षणेन अभिमुखमगच्छत् इत्यर्थः। संघेन अभियाति अभिसंघयति । णाविष्ठवत्प्रातिपदिकस्येति णौरूपं । ततोऽनद्यतने लङ् इति लङि लुङ् लङ् लङ्क्ष्वडुदात्त इति अडागमे प्रथमपुरुषस्यैकवचने अभ्यसङ्घयत् ।

२७३—सल्लोके भव्यलोके व्ययपित्वा वित्तोत्सर्गं कृत्वा प्रत्येकं पीरोजीनामकं नाणकं दत्वेत्यर्थः। व्ययण् वित्तसमुत्सर्गे चुरादिरदन्तः परस्मैपदी ।

२७८—लाभद्वयस्पृहाः—एकः प्रतिष्ठादर्शनलक्षणो लाभः, द्वितीयश्च श्रीविजयदेवसूरि-श्रीविजयसिंहसूरिद्वयवन्दनलक्षणो लाभ इत्यर्थः। लाभयोर्द्वयं लाभद्वयं तस्मिन् स्पृहा वाञ्छा येषां ते लाभद्वयस्पृहाः। ननु यत्र अल्पोऽपि लाभः स्यात्तत्रापि लाभाभिलाषिणा नरेण

श्रेष्ठेन विधिना सूरिः प्रत्यष्ठादुत्सवादथ । महावीरजिनेन्द्रस्य प्रतिमामपरा अपि ॥ २७९ ॥
प्रतिष्ठाय जिनेन्द्राणां चैत्यानि परमोत्सवैः । साधूनां विदुषां सूरिः प्रादात् पण्डितसत्पदम् ॥
व्रतरत्नानि पञ्चैव साधूनां भाविनामपि । तानि द्वादश दिव्यानि श्रावकाणां विशेषतः ।
( -साधुभ्यो जायमानेभ्यो व्रतरत्नानि पञ्च हि -इति वा पाठः ) ॥ २८१ ॥ युग्मम् ॥

श्रावको जयमल्लोऽपि सत्प्रतिष्ठाविधापकः । श्रीसाधर्मिक लोकेभ्यः प्रादाद्द्रव्याणि सद्धिया ॥
साधुभ्यो दर्शनिभ्य श्च महात्मभ्योऽप्यनेकधा । अदभ्राण्यतिशुभ्राणि वस्त्राणि प्रवराणि च ॥
एवं प्रावर्तत श्रेयान् प्रतिष्ठापरमोत्सवः । वर्णनीयः कवीन्द्राणां सूरिश्रावकयोस्तदा ॥२८४॥
अथान्यदा च सूरीन्द्रस्ततश्चिचलिषोत्सुकः । इत्याख्यज्जयमल्लाख्यं मन्त्रिणं संघसंयुतम् ॥२८५॥

इतीति किं तदाह—

श्रीनागपुरवास्तव्यः सङ्घ आह्वयति स्फुटम् । मेदिनीतटवास्तव्यस्तथान्योऽन्यत्र चान्वहम् ।२८६।
यदि ब्रूयाः प्रसह्य त्वं तदाहं विहराण्यतः।वन्दनाद्युद्भवं पुण्यं प्रापयाणि तथा च तम्।२८७।युग्मम्
तदानीं जयमल्लोऽयमुत्थाय विनयान्वितः । प्राञ्जलिर्नम्रसन्मौलिः सर्वश्राद्धशिरोमणिः ॥२८८॥
श्रीसुवर्णगिरिद्रङ्गवासी श्रीसङ्घ एव च । श्रेष्ठी लाधा महामन्त्री वर्धमानो महामतिः ॥२८९॥
साहः श्रीठाकुराख्यश्च साहुला श्रीकलाभिधः । वधा भ्रातृयुतोऽथान्यः साहः श्रीधर्मदासकः ॥
सङ्घपो डुङ्गरः श्रीमान् साहः श्रीडामराभिधः । वर्धमानादिको वर्धमानोऽमानश्रिया सदा ॥
विजयदेवसूरीन्द्रमित्थं व्यज्ञपयत्तराम् । साम्प्रतीनां चतुर्मासीं निवस श्रेयसे गुरो ! ॥ २९२ ॥
—पञ्चभिः कुलकम् ।

मन्त्रिणो जयमल्लस्य सङ्घस्यापि च भूयसे । श्रेयसे हृदयानन्दवृद्ध्यै चोमकरोद् गुरुः ॥२९३॥
सामायिकोपवासाद्यान् व्रतोच्चारादिकांश्च सः । अर्हन्निव महाधर्मान कारयन्वारयन्नघम् ॥२९३॥
धारयन् सर्वसंसारिजन्तुजातदयालुताम् । अपारयच्चतुर्मासीं न भावं भविनां गुरुः ॥ २९४ ॥
चतुर्मासीं समाप्याथ पुनश्चिचलिषुर्गुरुः । श्रीमन्तं जयमल्लाख्यमपृच्छच्छ्रावकोत्तमम् ॥२९५॥

---

गन्तव्यम् । यत्र तु भूयांसो लाभा भवेयुस्तत्र कथं न गन्तव्यं, अवश्यं तत्र गन्तव्यमित्याशयेन आगता इत्यर्थः ।

२८४—सूरिश्रावकयोः श्रीविजयदेवसूरिश्रीजयमल्लश्रावकयोः ।

२९३—ओमकरोत् चतुर्मासीं करिष्यामीति अङ्गीकृतवान् । स्यादोम् परमं मते—इति हैमः ।

२९४—अपारयत् समापयत । पारतीरण् कर्मसमाप्तौ चुरादिरदन्तः परस्मैपदी ।

अवस्थानं न साधूनामेकत्र किल युज्यते । अतोऽतोऽथ प्रतिष्ठेय भवदाज्ञा भवेद्यदि ॥२९६॥
श्रुत्वेति वचनं सूरिप्ररूपितमनिन्दितम् । संगृह्य चरणौ मूर्ध्ना संस्पृश्येति च सोऽवदत् ॥२९७॥
विजयसिंहसूरीन्द्रवन्दनकमहोत्सवम् । स्वयं कुरु गुरुश्रेयः श्रेयांसं करवै च तम् ॥२९८॥
इत्युक्तो जयमल्लेन स्वमनोरथसिद्धये । भवत्वेवं महाभाग सूरिराह प्रसन्नहृद् ॥ २९९ ॥
ततः श्रीजयमल्लोऽथ श्रावकान् देशदेशतः । श्रीमच्छिवपुरीवासितेजपालादिकान् घनान् ।३००।
विजयसिंहसूर्यंह्रिवन्दनोत्सव उत्तमः । भवितात्राऽतः समायान्तु मयि भूत्वा कृपापराः ॥३०१॥
ततो द्रव्यार्थिनः केऽपि केऽपि धर्मव्ययार्थिनः । केऽपि कौतुकिनो दक्षाः केऽपि तद्वन्दनोत्सुकाः ॥
अश्वारोहा रथारोहा ओष्ट्रारोहाश्च केचन । पदातिका अनेके च राजान इव राजिताः ॥३०३॥
सासिक्नीकाः सपत्नीका वरस्त्रीकाः समातरः । महाजनाः समाजग्मुर्बहिरन्तश्च चारिणः ॥३०४॥
—त्रिभिर्विशेषकम् ।

सौवर्णानि सुवर्णानि काय आभरणानि च । देवानामिव देवीनामिव पुंसां च योषिताम् ।३०५।
सुवर्णमिव सत्पौंस्नं स्त्रैणं चात्यन्तमोहकम् । तदेत्याहुर्जना वीक्ष्य सुवर्णगिरिरेषकः ॥३०६॥युग्मम्
यत्रानेकगवादीनां भूरिर्मारिरभूत्पुरा । अपूर्वा न कदा पूर्वं साऽभूच्छ्रीगुरुतेजसा ॥३०७॥
सुवर्णगिरिरित्याख्या यथार्थाद्याभवच्छुभा । इति ब्रुवन्ति सल्लोका यद्यथादृष्टसूचकाः ॥३०८॥
अथ श्रीजयमल्लाख्यः सन्मण्डपममण्डयत् । पारदेशिकवस्त्राणां वन्दनोत्सवहेतवे ॥ ३०९ ॥

अथ वन्दनोत्सवमण्डपवर्णनम्—

श्रीकैलासशिलातुल्याश्चञ्चुराः शुचयः सिचः । व्यभुध्वन्तिहृतो यत्र मध्याह्नार्कप्रभा इव ।३१०॥

---

२९६—अतः अस्मात्कारणात् । अतः श्रीसुवर्णगिरिनगरात् ।

३०४—धर्माय धर्मनिमित्तं व्ययमर्थयंतीत्येवं शीलाः धर्मव्ययार्थिनः । धर्मनिमित्तं व्यय-कर्तार इत्यर्थः। तयोः श्रीविजयदेवसूरि-श्रीविजयसिंहसूर्योर्वन्दना तस्यां उत्सुकास्तद्वन्दनोत्सुकाः। सह असिक्नीभिः अन्तःपुरचारिणीभिर्ये ते सासिक्नीकाः । 'असिक्नी स्यादवृद्धा या प्रैष्यान्तः-पुरचारिणीत्यमरः । सह पत्नीभिः परिणीतस्त्रीभिर्वर्त्तन्ते सपत्नीकाः ।

३०६—पुंसां समूहः पौंस्नं । स्त्रीणां समूहं स्त्रैणं । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति समूहेऽर्थे नञ्स्नञ्प्रत्यययोः साधू । एष एव एषकः । सर्वशब्देभ्यः स्वार्थे कन्निति कन् । सुव-र्णगिरिर्मेरुस्स इव । सुवर्णगिरिर्मेरुपर्वतोपम इत्यर्थः ।

३०८—यत्रेति व्याख्याः—सल्लोका इति ब्रुवन्ति । इतीति किम् ? सुवर्णगिरिरित्या-ख्याऽद्य यथार्थोऽभवत् । इतीति किम्? यत्र सुवर्णगिरौ अनेकगवादीनां भूरिर्मारिः पुराऽभूत् । सा न कदा पूर्वं श्रीगुरुतेजसा अपूर्वा मारिरभूत् ।

यत्र क्वापि च सौवर्णपत्राकारहराणि हि। पीतवासांस्यभासन्त चन्द्रभास इवोद्गताः ॥३११॥
अथवा–पीतवासः प्रशस्यश्रीमिषमासाद्यपिञ्जरः। मेरुः सूरी प्रणन्तुं किं यत्रायात इवाबभौ ॥
श्वेतपीताम्बरज्योतिः सूर्यचन्द्रोदितोदयम्। ( –प्रोदितादित्यचन्द्रमः –इति वा पाठः )।
अबाभान्नभ एवेदं यत्र क्वाप्यसिताम्बरम् ॥३१३॥
कुत्रचिद्यत्र वस्त्राणि पवित्राण्यरुणानि च। लक्ष्मीपुष्पकुलानीव लक्ष्मीं दातुं नृणां बभुः ॥३१४
अथवा–कुत्रचिद्यत्र वस्त्राणि रक्तानि नृमनांसि हि। कर्तुं हीङ्गुलवृन्दानि रक्तानीव बभुर्गुरौ ॥
यत्रान्यत्र च कुत्रापि नीलवस्त्राणि रेजिरे। हरिन्मणिकुलानीव निराकर्तुं द्विषद्द्विषम् ॥३१६॥
उन्नालपुण्डरीकालिरिव यत्र व्यराजत। स्तम्भश्रेणिः सुखश्रेणिकारणं सरसि स्फुटम् ॥३१७॥
अथवा–साक्षान्निशामणिश्रेणिः समकालमिवोदिता। द्रष्टुं तद्वन्दनां यत्र स्तम्भश्रेणिस्तदा बभौ॥
यत्र चन्द्रोदयः साक्षाच्चन्द्रोदय इव व्यभात्। अभितो मौक्तिकस्रग्भिस्तारकाभिर्विराजितः॥३१९
आस्थानवेदिकास्तम्भपुत्रिका देवता इव। यत्र वीजयितुं सूरिं स्थिता इव सुचामरैः ॥३२०॥

---

३१२–यत्र वन्दनोत्सवमण्डपे मेरुः सूरी श्रीविजयदेवसूरि–श्रीविजयसिंहसूरी कर्मतापन्नौ प्रणन्तु किमायात इव आ बभौ शुशुभे। किं कृत्वा? क्वापि कस्मिन्नपि स्थले पीतवासः प्रशस्यश्रीमिषमासाद्य।

३१३–यत्र मण्डपे क्वापि कुत्रचित्स्थले असिताम्बरं कालं वस्त्रं इदं नभ एव आकाशमिव अबाभात् अतिशयेन अदीप्यत। अत्र एवेत्यव्ययमिवार्थे। कथं भूतं कालं वस्त्रं श्वेतपीताम्बरज्योतिः सूर्यचन्द्रोदितोदयं श्वेतपीताम्बरयोर्धवलपिङ्गलचेलयोर्ज्योतिः कान्तिस्तदेव सूर्यचन्द्रयोरुदित उदयो यस्मिंस्तत्तथा। कथं भूतं नभः? श्वेतपीताम्बरयोर्धवलपिङ्गलचेलयोर्ज्योतिः कान्तिर्ययोस्तौ श्वेतपीताम्बरज्योतिषौ। एवं विधौ यौ सूर्यचन्द्रौ तयोः उदित उदयो यस्मिंस्तत्तथा। श्वेतपीताम्बरज्योतिः प्रोदितादित्यचन्द्रमः इति पाठान्तरम्। तत्रायमर्थः–किं भूतं? असिताम्बरं श्वेतपीताम्बरज्योतिरेव। प्रोदितौ आदित्यचन्द्रमसौ यस्मिंस्तत्तथा। यस्मिन् श्यामवस्त्रे पूर्वापरनिबद्धश्वेतपीताम्बरज्योतिरेव प्रोदितादित्यचन्द्रमसौ इव शोभते। द्वितीयपक्षे नभो विशेषणे श्वेतपीताम्बरज्योतिषौ प्रोदितौ आदित्यचन्द्रमसौ यस्मिंस्तत्तथा। कवयो हि सूर्यं श्वेतवर्णं वर्णयन्ति, चन्द्रं च पीतवर्णमिति।

३१४–लक्ष्मीपुष्पं पद्मरागमणिः।

३१५–कथंभूतानि रक्तानि वस्त्राणि उत्प्रेक्ष्यन्ते–हि निश्चितं गुरौ श्रीविजयसिंहसूरौ नृमनांसि रक्तानि कर्तुं हीङ्गुलवृन्दानीव। इवोऽत्र भिन्नक्रमे।

३१६–अग्रेतनेनान्वयः। यत्र मण्डपे स्तम्भश्रेणिर्व्यराजत। कस्मिन् केव–सरसि उन्नालपुण्डरीकालिरिव। कथंभूता स्तम्भश्रेणिः उन्नालपुण्डरीकालिश्च–स्फुटं सुखश्रेणिकारणम्।

अथवा–चित्रकृच्चित्रिताः स्तम्भपुत्रिका यत्र रेजिरे । नृत्यन्त्य इव नर्तक्यः करैः क्षिप्तैः च चामरैः॥
प्रालम्बानि प्रलम्बानि यत्र लम्बिनी चोच्चकैः । मुक्तास्रजोऽपि सर्वत्र व्यराजन्त च सर्वतः ॥
तानि ताश्च विलोक्यैवमशङ्कन्त तदा जनाः । मञ्जुलया वृक्षजातीनां गुच्छामञ्जरयश्च किम् ॥३२३
व्यराजद्यत्र सद्द्वारं रत्नादर्शैर्विनिर्मितम् । प्रचण्डानेकमार्तण्डैर्द्वारपालैरिवाश्रितम् ॥३२४॥
पार्श्वबद्धद्वीपोद्दण्डप्रोच्चशुण्डाभतोरणम् । पश्यतां सर्वलोकानां परमानन्दकारणम् ॥३२५॥
अथवा–इन्द्रसञ्ज्ञोकोद्दण्डकोदण्डोपमतोरणम् । पश्यतां सर्वलोकानां सर्वकल्याणसूचकम् ॥
मङ्गलैरष्टभिः श्रेष्ठैर्मुक्तारत्नमयैः शुभैः । शोभमानं मनुष्याणां मनोनेत्रोत्सवप्रदम् ॥३२७॥
–चतुर्भिः कलापकम् ।

न्यवेशयदथात्यन्तमुन्नतं तत्र मण्डपे । सिंहासनमतिश्रेयो जयमल्लः शुभाश्रयः ॥३२७॥
शोभमानयथास्थानग्रथितानेकरत्नकम् । सुरेन्द्रासनशोभायाः सर्वथा व्यपहारकम् ॥३२८॥
एतस्यैवेदमीदृक्षं योग्यं नान्यस्य कर्हिचित् । विधात्रेति धिया स्वीयकराभ्यामिव किं कृतम् ॥
साधसाधूचितानेकविस्तीर्णनवताद्भुतम् । स्पृहणीयं सुरेन्द्राणां नराणामुत का कथा ॥३३०॥
–चतुर्भिः कलापकम् ।

---

३२१–चित्रेति, अस्यान्वयलेशः–यत्र मण्डपे स्तम्भपुत्रिका रेजिरे । कथंभूताः ? उत्प्रेक्ष्यन्ते–क्षिप्तैः सुचामरैः करैर्नृत्यन्त्यो नर्तक्य इव । यथा नर्तक्यः क्षिप्तैः करैर्नृत्यन्त्यो राजन्ते तथा स्तम्भपुत्रिकाः क्षिप्तैः करैः सुचामरैर्नृत्यन्त्यो व्यराजन् इत्यर्थः ।

३२२–प्रालम्बानि झुम्बका इति भाषाप्रसिद्धानि यत्र मण्डपे ।

३२३–तानि प्रालम्बानि ताश्च मुक्ता स्रजः ।

३२९–३०, कथंभूतं सिंहासनं विधात्रा स्वीयकराभ्यां इति धिया किं कृतमिव । इतीति किं ईदृक्षमिदं सिंहासनं, एतस्यैव श्रीविजयसिंहसूरेरेव योग्यं । अन्यस्य न कर्हिचित् । पुनः कथंभूतं सिंहासनं ? साधु साधूचितानेकविस्तीर्णनवताद्भुतम् । साधवो रमणीया उग्रक्रियाकर्तृत्वात् । ये साधवोऽनगारास्तेषामुचितानि योग्यानि अनेकानि प्रचुराणि विस्तीर्णानि यानि नवतानीव नवतानि तैः–दलीचाप्रमुखविछावणासदृशवस्त्रैरद्भुतं यत्तत्तथा । 'कुथे वर्णपरिस्तोमप्रवेणी नवताऽस्ति राः' इति हैमवचनान्नवतशब्दस्य दलीचाप्रमुखस्य पर्यायत्वात् । नवतानीव नवतीनि उत्तमाच्छादनवस्त्राणीति व्याख्या । प्रवेण्याऽऽस्तरणं वर्णः परिस्तोमः कुशः कुथः नवतं चेति तुल्यार्थाः । 'प्रच्छदश्चोत्तरच्छद' इति हलायुधः । 'नववर्णकंबले आच्छादनमात्रे वा' इति तट्टीकावचनात् । नवतशब्दोऽत्र आच्छादनपर्यायोऽपि ज्ञेयः । तेन साधुसाधूचितानि अनेकानि विस्तीर्णानि यानि नवतानि विच्छावणा इति भाषाप्रसिद्धानि तैरद्भुतं यत्तत् साधुसाधूचितानेकविस्तीर्ण-

श्रेष्ठकाष्ठमयं मध्ये नानारत्नमयं बहिः। प्रत्यष्ठापयदुत्कृष्टं पट्टं सप्रच्छदान्वितम् ॥३३१॥
सूरेश्चरणयोर्बाधा माभूत्तुच्छापि कर्हिचित्। इति निश्चित्य सद्भक्तिधियेन्द्रादधिको यतः॥३३२
आधिक्यमाह—अर्हतोऽध्वनि पन्न्यासे पञ्चानीन्द्रो नवैव हि। मुञ्चेद्गिरतो मध्ये समवसरणस्य न॥
उपाश्रयस्य मध्येऽयं बहिस्तादपि चान्वहम्। पञ्चाधिकानि वासांसि प्रस्तृणाति पदोरधः॥३३४

—चतुर्भिः कलापकम्।

उत्तिष्ठतात्कदाचिच्च कदाचित्तिष्ठतादयम्। यथोचितमुपर्यस्य ददानः पदवन्दनाम् ॥३३५॥
इति कारणतः पट्टप्रतिष्ठापनयोग्यता। मण्डपे शोभमानाऽभूद्यद्विवेकः प्रमोदकृत् ॥३३६॥

—इति पट्टवर्णनम्।

लोकचक्षुविनोदाय प्रारब्धं प्रेक्षणीयकम्। विजयदेवसूरीन्द्रोऽविशत्तमथ मण्डपम् ॥३३७॥
विजयसिंहसूरीन्द्रस्तं प्रविश्य यथोचितम्। श्रीसूरिवचसा श्रीमत्सिंहासन उपाविशत् ॥३३८
पश्यतां सर्वलोकानामकरोत्पादवन्दनाम्। विजयसिंहसूरीणां विजयदेवसूरिराट् ॥३३९॥
यथाविधि तदानीं स द्वादशावर्तवन्दनाम्। व्यदधाच्छ्रीमतस्तस्य यदाचारः परः सताम्॥३४०
वन्दनां ददतस्तस्य पट्टाः स्तम्भासनस्थिताः। बभुः पुंपुत्रिका इन्द्रास्तिरोजाता इवेक्षितुम् ॥

( —व साक्षिणः—इति वा पाठः ) ॥३४१॥

सूरिमन्त्रं जगच्छत्रमिव सन्तापवारकम्। प्राददाद्वदनाम्भोजात् प्रसादसुभगाद्गुरुः ॥३४२॥
श्रीजयसागराख्यस्य श्रीकीर्तिविजयस्य च। श्रीवाचकपदं प्रादात् सूरिर्यत्सर्वतोषकः॥३४३॥
अन्येषां साधुलोकानां विदुषां सजुषां नृणाम्। श्रीपण्डितपदं प्रादात् सूरीन्द्रो यद्विवेकवान् ॥
गीयमानशुभैर्गीतैः स्फूर्जज्जयजयारवैः। स्तूयमानो गुणैः पुण्यैर्मागधैर्विबुधैरपि ॥३४५॥
गतव्याधिः समाधिश्रीलब्धसिद्धिः समृद्धिमान्। विजयसिंहसूरीन्द्रः प्राभवत् प्रभुताश्रिया।३४६
श्रीगुरौ सुप्रसन्ने हि किं न सिद्ध्यति वाञ्छितम्। अनीश्वरोऽपीश्वरः किं न नरः को भवेद्भुवि॥
सुस्वरा युवतीलोकास्तदा गेयान्यगाययन्। वाद्यान्यवादयन् वाद्यवादका अपि चोत्तमाः॥३४८॥

---

नवताद्भुतम्। पुनः कथंभूतं ? अत एव सुरेन्द्राणां स्पृहणीयं। उतेति वितर्के नराणां का कथा—किं कथनीयमित्यर्थः। इति सिंहासनवर्णनम्।

३३४—स जयमल्ल उत्कृष्टं पट्टं पाटि इति लोकभाषाप्रसिद्धं प्रत्यष्ठापयत्। कथंभूतं पट्टं मध्ये श्रेष्ठकाष्ठमयं बहिर्नानारत्नमयं। पुनः कथंभूतं ? प्रच्छादान्वितं प्रच्छदैः बिछावणा इति भाषाप्रसिद्धैरन्वितं युक्तं। कया प्रत्यष्ठापयत्। सूरेः श्रीविजयदेवसूरेश्चरणयोः कर्हिचित्तुच्छापि बाधा माभूदिति धिया। कथंभूतः स जयमल्लः—यतः इन्द्रादधिकः। तदेवाह—अर्हतोऽध्वनीत्यादि द्वाभ्यां अर्थः प्रसिद्ध एव।

३३५—अस्य पट्टस्य उपरि। इति पट्टवर्णनम्।

रूपकाण्यददाद्रूपं मन्त्री श्रीजयमल्लकः । स्वान्यदेशसमाहूतमहाजनकराम्बुजे ॥३४९॥
पट्टकूलान्यनेकानि मञ्जुलानि नवानि च । याचकादिकलोकानां जयमल्लस्तदाऽददात् ॥३५०॥
दिव्यदालीर्घृतव्यालीः सशालीः कलकुण्डलीः । अत्यादरात् स आहूय महाजनमभोजयत् ॥
एवं प्रावर्तत प्रेयान् तदा वन्दनकोत्सवः । सर्वेषां हृदि चानन्दः प्राप्तात्मेहितसम्पदाम् ॥३५२
श्रीमत्सूरेरथादूरे वसन्नुपविशन्नपि । विजयसिंहसूरीन्द्रो जयताज्जगतीतले ॥३५३॥

दत्तं श्रीगुरुणा धर्मराज्यं लब्ध्वा सशोभताम् । सवित्रा निहितं तेजो दिनान्तेऽग्निरिवाधिकम् ॥
दत्तसूरिपदं सूरिं प्रभुं शुश्रूवुषां च तम् । निःशल्ये हृदि शत्रूणां सोऽतिशल्यमिवाभवत् ॥३५५॥
प्रतिष्ठितं तमाकर्ण्य गच्छराज्येऽधितेजसि । द्विषां प्रोद्धूमिते पूर्वं हृदि सोऽग्निरिवोत्थितः ॥
तस्य सूर्योदयस्येव प्रातरुल्लोचनालयः । आनन्दन् श्रावका लोका नवाभ्युत्थानदर्शकाः ॥३५७॥
आक्रामद्गौरवं राज्यमरिवृन्दं च दुर्दमम् । सममेव स सूरीन्द्रः प्रतापतपनोपमः ॥३५८॥
शत्रून् सिंहांश्च दुर्जेयान् तेजसा चोजसा क्षणात् । यो जयति विशेषात् स विजयसिंह उच्यते ॥
इति नामाऽभवद्यस्य ततः प्रभृति सार्थकम् । विजयसिंहसूरीन्द्रो जयतात्स चिरं भुवि ॥३६०॥

भट्टारकपदव्याजात् तमदृश्या स्वयं किल । भजतादुग्रतेजाः श्री राजत्साम्राज्यदीक्षितम् ॥३६१
सूरिः सर्वस्य लोकस्य चेत आचारतोऽद्भुतात् । आदत्तां नातिशीतोष्णः समीर इव दक्षिणः ॥
चतुर्भिरधिकैर्वर्षैर्वर्षेऽशीतितमे शुभे । षोडशस्य शतस्याह्नि षष्ठे पौषसितस्य हि ॥३६३॥

एवं प्रशस्यसम्पन्नलक्ष्मीकः कान्तकौतुकः । चिरंजीव्यात्स सूरीन्द्रो यस्यासीद्वन्द्वनोत्सवः॥३६४
तदैवमस्तुवन् लोका यं नवं गच्छनायकम् । आशिषं चेदृशीं यस्मै ददुर्नन्दतु स प्रभुः ॥३६५॥

इत्थं श्रीविजयादिदेवसुगुरुः स्वीयेन सत्पाणिना,
प्राकार्षीद्विजयादिसिंहसुगुरोः पट्टाभिषेकोत्सवम् ।

---

३४९–प्रशस्तं अददाद्रूपं प्रशस्तं दत्तवानित्यर्थः । तिङोनुवृत्तेस्तिङन्तादपि प्रशंसायां रूपप् इति रूपप् ।

३५४–अग्निं चादित्यः प्रविशतीति श्रुतिः । यथाग्निर्दिनान्ते सूर्येण निहितं तेजः प्राप्याधिकं शोभते तथा श्रीविजयसिंहसूरिरपि श्रीगुरुणा श्रीविजयदेवसूरिगुरुणा दत्तं धर्मराज्यं लब्ध्वा शोभन्तामित्याशीः ।

३५५–दत्तेति अस्यान्वयः–स श्रीविजयसिंहसूरिः शत्रूणां परमतप्रतिवादिनैयायिकादिदर्शनिनां हृदि अतिशल्यमिव अधिकशल्योपमोऽभवत् । कथंभूते हृदि ? निःशल्ये शल्यरहिते इत्यर्थः । कथंभूतानां शत्रूणां सूरिं श्रीविजयदेवभट्टारकं दत्तसूरिपदं श्रीविजयसिंहसूरीणां सूरिपदं येन स तथा तं चः पुनः तं श्रीविजयसिंहसूरिं प्रभुं स्वामिनं गच्छनायकं शुश्रूवुषाम् ।

श्रीश्रीवल्लभपाठकेन पठितं विद्वज्जनानां मतम्,
श्रोतॄणां सुखदायकं भविविशामानन्दसम्पत्प्रदम् ॥३६६॥

इतिश्री श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराजपातिसाहिश्रीअकब्बरप्रदत्त-जगद्गुरुबिरुदधारकभ० श्रीहीरविजयसूरीश्वर० पातसाहिश्रीजिहांगीरप्रदत्तमहातपाबिरुदधारि भ० श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरिप्रदत्त श्रीविजयसिंहसूरिभट्टारकपदप्रदानवर्णनो नाम ९ सर्गः ॥

# दशमः सर्गः

अथ श्रीमेडताद्रङ्गे, हर्षो हर्षकरोऽभवत् । सदा तत्रत्य लोकानामन्येषां च विशेषतः ॥१॥
निविरीसा इवोर्वीशा धनीशाश्चापरे जनाः । यस्यासन् पुर आसीना नाहर्षस्तेन केऽप्यमा ॥२॥
अवष्टभ्य सदा तिष्ठन् यदंह्री जीविकार्थिनः । कलौ लोका अनेकेऽस्मिन् नाहर्षस्तेन केऽप्यमा ॥
सदादाने सदा नृभ्यो ददत्यन्नादि दायकाः । न पशुभ्यो विशिष्येति पशुभ्योऽपि ददान्यहम् ॥४
विचार्येत्यददद्दानं नरतिर्यग्भ्य ईप्सितम् । कर्णादिदानशौण्डेभ्यो हर्षोऽयमधिको यतः ॥५॥
तद्यथा–सदादाने ददौ सोऽन्नं नराणां जीविकाकृते ।
पशूनां च खटान् दिव्यान् तेन स्पर्धेत कोऽप्यमा ॥ ६ ॥
यस्याद्यापि सुताः शश्वद्ददत्यन्नं खटानपि । मनुष्येभ्यः पशुभ्यश्च तेन स्पर्धेत कोऽप्यमा ॥७॥
श्रीशत्रुञ्जयसत्तीर्थरैवतकार्बुदादिषु । नेमुस्तीर्थकृतः सङ्घं कृत्वा प्राग् भरतादयः ॥८॥
कृत्वा तैः सह संहर्षं श्रीहर्षो हर्षवद्वरः । करवाणि महासङ्घमिति चेतस्यचिन्तयत् ॥९॥
पूजयानि च तत्रत्याः प्रतिमा अर्हतां समाः । निर्माणि च महापुण्यं फलं लक्ष्म्या लभै पुनः॥
–त्रिभिर्विशेषकम् ।
तदानीं स विचिन्त्येति महासङ्घं विधाय च । स्वगुरूनन्यसाधूंश्च लात्वाऽमा तीर्थमाव्रजत् ॥११॥

---

२–तेन श्रीहर्षेण नाम्ना श्रावकेणाऽमा सह केपि नाऽहर्षन् न स्पर्धां चक्रुरित्यर्थः । तेन केन ? यस्य पुर आसीना उर्वीशा धनीशाः, चः पुनः अपरे जनाः निविरीसा इव नतनासिका इव कृतनासिका नमना इव आसन् । नेर्बिड् च विरीसचौ । इति नासिकायाः सम्बन्धिनि नमने वाच्ये निशब्दात् विरीसच् प्रत्यये निविरीसं, तद्योगात् पुरुषा अपि निविरीसाः । निविरीसा इव नतनासिकपुरुषा इव ये तेऽपि । इव शब्दस्य लोपे निविरीसाः कृतनासिका नमनास्ते इव इत्युपमा ।

३–तेन हर्षानाम्ना श्रावकेण अमा सह केपि नाऽहर्षन् न अस्पर्धन्त । तेन केन ? यदंह्री अवष्टभ्य आलम्ब्य अस्मिन् कलौ जीविकार्थिनो अनेके लोकाः सदा अतिष्ठन् । अवष्टभ्येत्यत्र अवाच्चालम्बनाविदूर्ययोरिति आलम्बनेऽर्थे स्तम्भेः सकारस्य मूर्धन्यादेशः ।

४–सदादाने सत्रूकार इति भाषाप्रसिद्धे ।

१०–आशीः प्रेरणयोः-करवाणि पूजयानि निर्माणि एतानि त्रीणि मेर्निरिति लोटो मेर्नि इत्यादेशे आडुत्तमस्य पिच्चेति आडागमे लोट उत्तमपुरुषैकवचनानि । लभै इति च एतपेरिति एत ऐ आदेशे लोट आत्मनेपदे उत्तमपुरुषैकवचनम् ।

११–तीर्थं श्रीरैवताचलं आव्रजत् प्राप्तवान् ।

श्रीनेम्यादिजिनाधीशान् पूजयित्वाऽभिवन्द्य च। कृत्वा लम्भनिकां सङ्घं प्रभोज्य च ततोऽचलत्॥
प्रचलन् सह संघेन तीर्थं शत्रुञ्जयाभिधम् । प्राप्यारुह्य च सोऽभ्यर्चदादिदेवादितीर्थपान् ॥१३॥
सो वारुह्य ततः संघं प्रभोज्यामृतभोजनम् । पाणौ प्रदाय रूप्याणि पुण्यमादाय चाचलत् ॥१४॥
श्रीमदहम्मदावादं तत आगत्य सप्रभुः । अपूपुजज्जिनाधीशांश्चैत्येषु विविधेष्वपि ॥१५॥
विजयसेनसूरीन्द्रं विजयदेवसद्गुरुम् । अभिवन्द्य च सङ्घस्य मध्य आकार्य सोऽर्चयत् ॥१६॥
लम्भनिकां विधायाथ तत्रत्य श्रीमहाजने । प्रतस्थे प्रततस्थेमा ततो देशं स्वकं प्रति ॥१७॥
आयन् शंखेश्वरादीनि तीर्थान्यन्यानि चाध्वनि । पूजयन् लंभनीं कुर्वन् प्रापार्बुदगिरिं च सः॥
पूजयित्वा जिनांस्तत्र कृत्वा लम्भनिकां च सः । श्रीमच्छिवपुरीस्वर्णगिरिदेवानपूपुजत् ॥१९॥
एवं धर्माननेकान् यो व्यदधाद् विधिपूर्वकम्। श्रीहर्षः कस्य हर्षाय नाभूद्धर्मपरायणः ॥२०॥
तस्य पुत्रा अमी सन्ति पञ्च पञ्चेन्द्रिया इव। विराजन्ते जगज्जोतीरूपा रूपश्रियाद्भुताः ॥२१॥
तद्यथा-प्रथमो जसवन्ताख्यो, द्वितीयो जयराजकः । तृतीयो नेमिदासश्च सामीदासश्चतुर्थकः॥
श्रीमद्विमलदासश्च, पञ्चमः पञ्चमो गुणैः । पञ्चाप्येते मिथः प्रीताः सर्वप्रीतिविधायकाः ॥२३॥
—त्रिभिर्विशेषकम् ।

पञ्चानामादिमस्तस्य जीवराजः सुतोऽभवत् । पितुः सेवापरत्वेन पितुः स्वर्गमनुव्रजत् ॥२४॥
(—पितृस्नेहाधिकत्वेन—इति वा पाठः)

पञ्चापि चैकदेत्येते संभूयाचिन्तयन्मिथः । आत्मभिः कारितं श्रीमत्सुवर्णगिरिपत्तने ॥२५॥
श्रीमत्समवसरणप्रासादः सर्वतोऽद्भुतः । प्रतिमाः श्रीपार्श्वनाथादिजिनानां कारिता इमाः ॥२६॥
ताः प्रतिष्ठापयामाऽऽशु यदि स्यात्सर्वसम्मतम् । श्रीविजयदेवसूरीन्द्रमिहाहूय महादरात् ॥२७॥
—त्रिभिर्विशेषकम् ।

---

१८—आयन् आगच्छन्—इ गतौ अदादिः परस्मैपदि आङ्पूर्वस्य अस्य धातोः शतृप्रत्यये आयन् इति रूपम् ।

२३—'पञ्चमो रुचिरे दक्षे' इति वचनात् पञ्चमशब्दोऽत्र रुचिरपर्यायः ।

२६—श्रीमत्समवसरण इत्यत्र पदे श्लोकलक्षणाभावे पि षड्ह्रस्वाक्षरपदं न दोषाय । यत् श्रीहेमचन्द्राचार्यैः श्रीनेमिचरित्रे—" शुभेऽह्नि कनकवतीं कलाग्रहणहेतवे । उचितस्य कलाचार्यस्यार्पयामास भूपतिः ॥१॥" इति । यथा शुभेऽह्नि कनकवतीमित्यस्मिन् श्लोके पञ्चह्रस्वाक्षरं पदं न दुष्टं तथा श्रीमत्समवसरणमिति पदमपि न दुष्टं। प्रतिष्ठापयामेति च, ष्ठा गति निवृत्तौ इत्यस्य हेतुमति चे तिणि चि अर्तिह्रीति पुगागमे उपसर्गात् सुनोति सुवतीति सकारस्य मूर्धन्ये लोट उत्तमपुरुषवचनम् ।

मिथोऽङ्गीकृत्य पश्चाऽपि श्रीप्रतिष्ठाविधापनम् (-मिथोऽङ्गीकृत्य पश्चाप्यर्हत्प्रतिष्ठाविधापनम्- इति वा पाठः ) भ्रातृव्यं जिनदासाख्यमपृच्छन् यज्ज्येष्ठनन्दनः ॥२८॥

आलोच्यैवं षडप्येते मिथोऽतिप्रीतचेतसः। अपृच्छन् मेडताद्रङ्गवासिसङ्घं विवेकिनः ॥२९॥

तद्यथा-कोठारीवंशविख्यातष्टीलाख्यः श्रावकोत्तमः।
सोनीवंशे जिनो नाम, सिंहः श्रीमालगोत्रकः ॥३०॥

श्रीमालगोत्रसंजातः षेतसिंहाभिधोऽभवत्। पुत्रत्वेन धृतस्तेन भाति डूङ्गरसिंहकः ॥३१॥

राजसिंहाभिधो मन्त्री, वल्लू नामा च मन्त्रिराट्। श्रीनाथो नाथनामा च, मन्त्री नरबदाङ्गजः॥

नगरव्यवहारीन्द्रमित्यादिसमुदायकम्। समाहूय च संभूय प्राणयन्निति ते मिथः ॥३३॥
-चतुर्भिः कलापकम्।

प्रतिष्ठां पार्श्वनाथादिबिम्बानां कारयाम हि। विजयदेवसूरीन्द्रमिहाहूय महोत्सवात् ॥३४॥

तैः पृष्ट इति ते प्राहुर्वरं कुरुत भो वरम्। अत्रालस्यमपास्यं यत् धर्मस्य त्वरिता गतिः ॥३५॥

तानिदं ते पुनः प्राहुः सहास्माभिः समावत। प्रसीदतात्र सद्धर्मकार्ये यूयं महाजनाः ॥३६॥

तेऽप्यूचुरिति तान् सर्वान् प्रतिपन्नमिदं वचः। गुरुं विज्ञपयिष्यामः सहैष्यामश्च निश्चितम् ॥३७॥

ततः श्रीमेडताद्रङ्गवासिसंघसमन्विताः। प्रातिष्ठन्त शुभे तेऽह्नि श्रीसुवर्णगिरिं प्रति ॥३८॥

प्रचलन्तः समाजग्मुस्ते जावालपुरे ततः। ववन्दिरे च सोत्साहाः श्रीसूरिचरणाम्बुजम् ॥३९॥

अभिवन्द्य तदानीं ते सूरिं व्यज्ञपयन्निति। गच्छनाथ समागच्छ श्रीमत्सन्मेदिनीतटे ॥४०॥

पार्श्वनाथादिदेवानां प्रतिमाः प्रतिष्ठ च। ततः समवसरणप्रासादे स्थापयामहि ॥४१॥ युग्मम्।

मन्त्रिणं जयमल्लं ते मिलित्वा चावदन्निदम्। सूरीन्द्रं मुञ्च धर्मात्मन्नैति यत् त्वद्वचोविना॥

ततः श्रीजयमल्लोऽपि मेदिनीतटसङ्घयुक्। उपसूरि समागत्य नत्वा चैवं न्यवेदयत् ॥४३॥

जसवन्ताद्या इमे पञ्च श्रीहर्षतनयाः शुभाः। टीलादि-मेडताद्रङ्गवासिसङ्घसमन्विताः॥४४॥

सूरे विज्ञपयन्तीति प्रतिमाः प्रतितिष्ठ हि। श्रीमन्मेदतटद्रङ्गमेहि नः कुरु चेप्सितम् ॥४५॥ युग्मम्।

---

२८-ज्येष्ठस्य बृहद्भ्रातुर्जीवराजाख्यस्य नन्दनः पुत्रः ज्येष्ठनन्दनः। 'ज्येष्ठः स्यादग्रजे' इति हैमानेकार्थः।

३३-ते हर्षपुत्राः संभूय मिलित्वा इत्यादिसमुदायकं कोठारी टीलाप्रमुखं श्रीमेडतासङ्घं समाहूय मिथः इति प्राणयन् इत्यकथयन्। इतीति किं तदाह।

३४-हीत्यव्ययं निश्चये। ३५-तैः हर्षपुत्रैः। ते टीलाप्रमुखाः।

३६-समावतेति-अव गतौ इति धातोस्समाङ्पूर्वस्य आगमनार्थस्य लोटो मध्यमपुरुष-बहुवचनम्।

एवं विज्ञापितस्तेन ततः प्रास्थात् शुभेऽहनि । विजयदेवसूरीन्द्रो विजयसिंहसूरियुक् ॥४६॥
श्रावका अपि ते प्रास्थन् जसवन्तादयस्ततः । श्रीमन्मेदतटद्रङ्गं प्राप्नुवंस्तेऽग्रतो द्रुतम् ॥४७॥
श्रीसूरिर्जन्तुजातानि प्रापयन् धर्ममार्हतम् । श्रीमन्मेदतटद्रङ्गसमीपं समुपागमत् ॥४८॥
श्रीहर्षाङ्गरुहाः सर्वे जसवन्तादयस्ततः । श्रुत्वा सूरिं समायातं वन्दितुं चाभ्यसंघयन् ॥४९॥
अभिवन्द्यानयन् सूरिं मेडतानगरान्तरे । विमान इव यत्रास्ति जनराजिन्युपाश्रये ॥५०॥
( -जनाश्रय उपाश्रये -इति वा पाठ )
श्रीसूरीन्द्रः समारुह्य भद्रं भद्रासनं तदा । निदानं वाञ्छितर्द्धिनां जिनधर्ममुपादिशत् ॥५१॥
उदतिष्ठत्ततः सङ्घः श्रुत्वा धर्मं गुरूदितम् । प्रादात्संघाय रूप्याणि जसवन्तो महाशयः ॥५२॥
एवं मेदतटद्रङ्गे विजयदेवसद्गुरोः । विजयसिंहसूरेश्च जात आगमनोत्सवः ॥५३॥
अथ श्रीजसवन्ताद्याः श्रीहर्षाङ्गरुहाः समे । सूरिं व्यज्ञपयन्नेवं प्रणम्य चरणाम्बुजम् ॥५४॥
प्रतिमानां प्रतिष्ठार्हं श्रेष्ठमीक्षस्व वासरम् । विजयदेवसूरीन्द्र ! सूरीन्द्रप्रणताम्बुजम् ! ॥५५॥
पुण्याहं सुदिनाहं च ततः सूरिर्निरैक्षत । माघमासे सिते पक्षे पञ्चमं पञ्चमं द्युषु ॥५६॥
सूरिस्तान् ज्ञापयामास वासरं भासुरं शुभैः । माघमासस्य पक्षस्य शुक्लस्य खलु पञ्चमम् ॥५७॥
अभ्युत्थाय ततः सूरिं नत्वा गत्य च मन्दिरे । प्रतिष्ठायोग्यसामग्रीमग्रिमां ते ह्यकारयन् ॥५८॥
रोदस्योरन्तरालस्थं विमानद्वयमुन्नतम् । मण्डपद्वयमानन्दविधायकमकारयत् ॥५९॥
लोकानां भोजनायोच्चं मन्दिरस्याग्रतः स्थितम् । प्रतिमानां प्रतिष्ठायै योग्यस्थाने द्वितीयकम् ॥
यशोजुगन्धरीस्फुर्जद्दृगञ्जद्वन्द्वमिवं किमु । यशस्तण्डुलसद्वञ्जद्वन्द्वं वेति विदुर्जनाः ॥६१॥

---

४९-अभ्यसन्घयन्-सङ्घेन अभिमुखमगच्छन् । सङ्घेन अभियाति अभिसङ्घयति । णाविष्ट वत्प्रातिपदिकस्य इति णौ रूपं । ततः अनद्यतने लङिति लङि प्रथमपुरुषबहुवचनमभ्यसङ्घयन्निति ।

५०-मेडतानगरस्य अन्तरं मध्यं मेडतानगरान्तरं तस्मिन् । अत्र अन्तरशब्दो मध्य-पर्यायो न सर्वादिकार्यभाक् । कथंभूते उपाश्रये जनराजिनि-जनै राजत इत्येवं शीलो जनराजी तस्मिन् जनराजिनि । अथवा जनाश्रय उपाश्रये इति पाठान्तरं तत्रायमर्थः-कथंभूते उपाश्रये जनानां आश्रय इव जनाश्रयस्तस्मिन् । कथंभूते उपाश्रये ? विमाने इव विमानोपमाने इत्यर्थः । कथंभूते जनराजिनि सुरलोकशालिनि । जनाश्रय इति पाठे सुरलोकाश्रय इत्यर्थः । सूरिं-प्रथमपक्षे श्रीविजयदेवसूरिं, द्वितीयपक्षे सूरिं अर्थाद्बृहस्पतिम् ।

५४-समे सर्वे पञ्चापीत्यर्थः । समशब्दोऽत्र सर्वपर्यायः सर्वादिकार्यभाक् ।

५६-द्युषु दिवसेषु । पञ्चमं मनोज्ञम् ।

६१-इदं मण्डपद्वयं जना इति विदुः-इत्यजानन् । इतीति किं किमु इति वितर्के । यशो जुगन्धरीस्फूर्जद्दृगञ्जद्वन्द्वं । वा इति पक्षान्तरे । यशस्तण्डुलसद्वञ्जद्वन्द्वम् ।

प्राज्यानि प्राज्ययोज्यानि कुण्डलीप्रमुखानि ते । शालिदालिघृतालीनि भोजनानि अपाचयन् ॥
केसराणां सुवारीणि चूर्णानि सुरभीणि च । अकारयन् छटायै ते पटवासाय च स्फुटम् ॥६३॥
कर्पूरागरुकस्तूरीचन्दनादीनि चानयन् । वस्तूनि ते प्रशस्तानि प्रतिमार्चनहेतवे ॥६४॥
यथायोग्यं यथाशास्त्रं यथाविधि यथोदितम् । प्रतिष्ठायोग्यसामग्रीं व्यधुरेवं बुधा हि ते ॥६५॥
मण्डपे मण्डयन् बिम्बैः श्रीसहस्रफणादिभिः । अनेकैः शोभितं श्रीमत्पार्श्वबिम्बं ततस्तके ॥६६
विजयदेवसूरीन्द्रो विजयसिंहसूरियुक् । प्रतिष्ठासमयं ज्ञात्वा मण्डपेऽथ समागमत् ॥६७॥
बिम्बं श्रीपार्श्वनाथस्य श्रीसहस्रफणस्य च । बिम्बैरन्यैर्युतं सूरिः प्रत्यतिष्ठ्यथाविधि ॥६८॥
ततः श्रीजसवन्ताद्या भ्रातरः पञ्च भक्तितः । विजयदेवसूरीन्द्रनवाङ्गान्यभ्यपूपुजन् ॥६९॥
कारयित्वा प्रतिष्ठां ते रूपकाणि तदा ददुः । महाजनेभ्य इभ्योद्घाः परमानन्दमेदुराः ॥७०॥
सूरीन्द्रोऽनेकसाधूनां श्रीपण्डितपदं ददौ । साधवः श्रावकाश्चान्ये तदा सन्तुतुषुस्तराम् ॥७१॥
ततः पञ्चजनीनास्ते निमन्त्र्य श्रीमहाजनान् । प्रभोज्यं केसराम्बूनां छटाचूर्णैरपूपुजन् ॥७२॥
एवं श्रीमेडताद्रङ्गेऽर्हत्प्रतिष्ठामहोत्सवः । विजयदेवसूरीन्द्रकृतः प्रावर्तताद्भुतः ॥७३॥
प्रतिष्ठासुरथापृच्छत् सूरिः सङ्घं जगद्गुरुः । अत आकारयन्त्यन्ये प्रतिष्ठे भवदाज्ञया ॥७४॥
ततः श्रीमेडताद्रङ्गवासी सङ्घोऽब्रवीदिति । प्रतिष्ठसे यदा सूरे त्वां निषेधति को जनः ॥७५॥
परमत्रत्य सङ्घोऽयं भोज्यमाज्यं निषेधति । भोजने भोजनेष्ठं च भो जनेश्वर सद्गुरो ! ॥७६॥
स्मित्वा सूरिरपि प्राह श्रीसङ्घं विस्मयान्वितः । किं ब्रूषे सङ्घ सोऽप्याह चतुर्मासीं कुरुष्व भोः॥
तत एवमभाषिष्ट सूरिः सङ्घं विचारवित् । चतुर्मासीं विधातास्मि युष्माकं च समीहितम् ॥७८

अभिवन्दे जिनाधीशाः सन्ति ये तान् मरौ किल ।
अथवा—अभिवन्दे जिनाधीशप्रतिमा या मरौ हि ताः ।
तीर्थानि यानि विद्यन्ते तानि पश्यानि चात्मनाऽधुना ॥७९॥

प्रत्ययेऽस्मिन् गृहाणेदं मम स्वाध्यायपुस्तकम् । सत्यंकारमिवेदं चेत्संघ नो मनुषे वचः ॥८०॥
अस्मिन्नवसरे श्रीमत्पुरं योधपुरं वरम् । वरीवर्ति सुखस्फूर्ति लक्ष्मीमूर्तिमयं सदा ॥८१॥
गजसिंहो महाराजस्तत्र शश्वद्विराजते । पराजितपरानेकगजसिंहपराक्रमः ॥८२॥

६२—ते जसवन्तादयः पञ्च भ्रातरः भोजनानि अपाचयन् । कथंभूतानि प्राज्यानि प्रचुराणि प्राज्ययोज्यानि प्रवरहविर्योजनीयानि भोजनानि । अपाचयन् इत्यत्र इकोऽसवर्णे साकल्यस्य ह्रस्वश्चेति प्रकृतिभावः, न इकोयणचीति यण् ।

६३—चूर्णानि अबीरगुलालप्रमुखभाषाप्रसिद्धानि ।

८०—हे सङ्घ ! चेदिदं वचः चतुर्मासीं स्थास्यामि इत्येतल्लक्षणं नो मनुषे तर्हि अस्मिन् प्रत्यये प्रतीतौ इदं मम स्वाध्यायपुस्तकं सत्यंकारमिव गृहाण ।

पद्मा पद्माशयं ज्ञात्वा पद्माख्यामिषतो श्रसत् । स श्रीपद्माभिधस्तत्र वसति व्यवहारिकः ॥८३॥
कदापि यद्वचो न्याये भूपा नैवोदलङ्घयन् । वार्ता का चान्यलोकानां प्राड्विवाकमतल्लिका ॥८४॥
धर्मात्मा न च दुष्टात्मा द्वेषचेताः कदापि न । भक्तः समस्तसाधूनामासक्तः सुकृतेऽर्हतः ॥८५॥
–त्रिभिर्विशेषकम् ।

तस्य पुत्रावुभावास्तां भैरवाख्य-शुभाख्यकौ । राज्ञः श्रीसूरसिंहस्य मन्त्रिणौ परमप्रियौ ॥८६॥
आयुषः क्षयतस्तौ हि प्रागेवागच्छतां दिवम् । वर्तन्ते च तयोः पुत्राः पौत्राः पद्माभिधस्य च ॥
तद्यथा–श्रीभैरवसुतः श्रीमान् सिंहमल्लवलो नृषु । श्रीसिंहमल्लनामास्ति मन्त्रिराजो महीपतेः ॥
शुभाः शोशुशुभाः पुत्राः शुभाख्यस्य शुभा इव । चत्वारः प्रियचत्वारः एते सन्तीह सम्प्रति ॥
तानाह–प्रथमः सुखमल्लाख्यो द्वितीयो रायमल्लकः । तृतीयो रणमल्लाख्यस्तुर्यः प्रतापमल्लकः ॥
श्रीपद्माख्यस्य नप्तारस्त्रातारोऽमी नरान् भुवि । जिनधर्मं विधातारो वर्तन्ते गुरुसेवकाः ॥९१॥
सीहमल्लोऽभवत्पुण्यात् श्रीमद्योधपुराधिपः । मेदिनीतटसद्द्रङ्गनाथः श्रीसुखमल्लकः ॥९२॥
गजसिंहमहाराजराज्यभारधुरन्धरौ । गजसिंहमहाराजस्थापितौ तौ व्यराजताम् ॥९३॥
तयोः पितामहः श्रीमत्सूरीश्वरं विवन्दिषुः । श्रीपद्माभिध आगच्छत् तदानीं मेदिनीतटे ॥
तदा पद्माभिधो मन्त्री पद्मापद्ममदात्तराम् । महाजनाय सूरीन्द्रद्वयं नत्वातिभक्तितः ॥९५॥
( –महाजनाय सूरीन्द्रं प्रणिपत्याति भक्तितः –इति वा पाठान्तरम् )
ततः श्रीमेडताद्रङ्गात् प्रास्थात् सूरीश्वरो द्रुतम् । घंघाणीति प्रसिद्धाख्ये द्रङ्गे नन्तुं जिनेश्वरान् ॥
मार्गे ग्रामीणसल्लोकान् शीलधर्मं प्रपालयन् । घंघाणीनगरं प्राप श्रीसूरिः सङ्घसंयुतः ॥९७॥
समाजगाम तत्रापि श्रीपद्मः संघनायकः । नप्त्रा श्रीसीहमल्लेन देशाधीशेन संयुतः ॥९८॥

८८–भइरवसुतः सीहमल्लः ।

८९–शुभाख्यस्य एते चत्वारः पुत्राः इह योधपुरे सन्ति । किं भूताः ? शुभाः शौर्यौदार्यादिगुणैर्मनोहराः । अत एव पुनः क० शोशुशुभाः शुभि दीप्तौ, शोभन्ते पुनः पुनरिति शोशुशुभाः शोभनशीला इत्यर्थः । बहुलं गुणवृद्धी चादेरिति किदडप्रत्यये सरूपद्वित्वे पूर्वस्य उकारे च साधुः । पुनः क० ? उत्प्रेक्ष्यन्ते–शुभा इव शुभयोगा इव । पुनः क० ? प्रियचत्वारः प्रियाः चत्वारो येषां ते प्रियचत्वारः । चतुर्शब्दस्य उपलक्षणात् प्रियसर्वा इत्यर्थः ।

९१–त्रातारः विधातारः इत्युभयत्र न लोकाव्ययनिष्ठाखलर्थतृनामिति तृन् प्रत्ययान्तत्वात् षष्ठीनिषेधात् । नरान् जिनधर्ममत्रोभयत्र द्वितीया ।

९५–पद्मापद्मं लक्ष्मीनिधानम् ।

९७–सङ्घसंयुतः श्रीमेडताद्रङ्गसङ्घसंयुक्त इत्यर्थः ।

अभ्यवन्दत सूरीन्द्रस्तीर्थकृत्प्रतिमा रमाः। श्रीपद्मस्ता गुरुं चैव जनेभ्योऽदाच्च रूपकं (लंभनीम्)
मादाच् श्रीसीहमल्लोऽपि रूपकाणि यथोचितम्। प्रभोज्य मञ्जुलं भोज्यं मृष्टं सर्वमहाजनम्॥
ततः श्रीतिमिरीद्रङ्गे पार्श्वनाथं जिनोत्तमम्। उपकेशपुरे सूरिर्वीरं च प्राणमत्तराम् ॥१०१॥
लोका अनेके रूप्याणामकुर्वन् लंभनीर्घनाः। उत्सवानप्यनेकांश्च तत्संख्यां नामवं खलु॥
न्यवर्तत ततः सूरिः प्रति श्रीमेदिनीतटम्। संविधातुं चतुर्मासीं सङ्घस्याग्रे प्रतिश्रुताम् ॥१०३
विहरन् क्रमतोऽथैवं प्राप्नोच्छ्रीमेदिनीतटम्। उत्सवैर्बहुभिर्दिव्यैः प्राविशत्तदुपाश्रयम् ॥१०४
परिपूर्णां चतुर्मासीं श्रीसूरिरकरोत्सुखात्। तन्मुखालोकतृप्त्या तु श्रीसङ्घो नाक्षिसन्ततिम्॥

एवं श्रीविजयादिदेवसुगुरुः सम्प्रत्यतिष्ठत्तराम्,
श्रीमन्मेदतटे स्फुटे सुखचयैश्चञ्चचतुर्मासकम्।
अर्हद्बिम्बसमुच्चयं च रुचिरश्रीः प्रत्यतिष्ठत्तराम्,
श्रीश्रीवल्लभपाठकोदितयशाः सर्वत्र जाग्रद्यशाः ॥१०६॥

इतिश्री श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराजपातिसाहिश्रीअकब्बरप्रदत्त-जगद्गुरुबिरुदधारकभट्टारक श्रीहीरविजयसूरीश्वरपट्टालङ्कारपातसाहिश्रीअकब्बरसभासंलब्धदुर्वादि जयवादभट्टारकश्रीविजयसेनसूरीश्वरपट्टपूर्वाचलसहस्रकरानुकारि पातिसाहिश्रीजिहांगीरप्रदत्तमहा-तपाबिरुदधारि भ० श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवसूरीणां प्रथमागमन-प्रति-ष्ठाविधान-श्रीसंघाग्रहचतुर्मास्यवस्थानवर्णनो नाम १० सर्गः॥

९९-रूपकमित्यत्र जातावेकवचनं तेन रूपकाणीति व्याख्येयम्।

१०३-कथंभूतां चतुर्मासीं सङ्घस्याग्रे प्रतिश्रुतां अङ्गीकृतां। प्रतिज्ञातमूरीकृतोररीकृते संश्रुतमभ्युपगतमुररीकृतमाश्रुतं संगीर्णं प्रतिश्रुतं चेति हैमकोषः।

१०४-तस्मिन् मेदिनीतटे उपाश्रयस्तदुपाश्रयस्तं तदुपाश्रयम्।

# एकादशः सर्गः

अथ सागरपक्षीयः सान्तीदासो महर्द्धिकः । श्रावकः श्रावकाधीशो नरेश इव शोभते ॥१॥
श्रीमत्यहम्मदावादे वदावदवशंवदः । श्रीमत्सागरपक्षीयसूरिधर्मपरायणः ॥ २ ॥ युग्मम् ।
एकदा व्यमृशच्चित्ते स्वीयगुर्वोः परस्परम् । कथं विवाद एकत्वे द्वित्वं चापि कथं पृथक् ॥३॥
प्रभाते गुरुमापृच्छ्य परस्परप्ररूपणाम् ( –धर्म द्वयप्ररूपणाम् –इति वा पाठः )
निर्णयानि हि साक्षित्वमङ्गीकृत्य तदा वरम् ॥४॥ युग्मम् ।
गुरोः पार्श्वे समागत्य श्रीगुरुं स न्यवेदयत् । मदुक्तं वचनं सत्यं कुरु चेद्वरमिच्छसि ॥५॥
विजयदेवसूरीन्द्रं श्रीमन्मेदतटात् पुरात् । आह्वयाऽन्याऽऽदरं कृत्वा मुक्त्वात्मीयजनानपि ॥६॥
यदि त्वं पूर्वशास्त्राणामनुसारनिरूपिताम् । कुर्याः प्ररूपणां सारां नान्यथा द्वेषपोषिकाम् ॥७॥
सूरे सर्वजनीना यज्जिनधर्मप्ररूपणा । क्वापि पारंपरीणा च भवेत्सर्वपथीनिका ॥८॥
ततस्तस्य गुरुः प्राह–ब्रूषे श्रावक सुन्दरम् । तमाह्वय, स आयातादायान्यहमितो ध्रुवम् ॥९॥
सान्तीदासस्तदोत्थाय साधर्मिकानकारयत् । तानापृच्छ्य च तानेव तमाह्वातुमचालयत् ॥१०॥
विजयदेवसूरीन्द्रश्रावकैरपि संयुतान् । परस्परमुभौ ते हि यद्विरोधनिषेधकाः ॥११॥ युग्मम् ।
प्रचलन्तस्त आगच्छन् पुरे श्रीमेदिनीतटे । विजयदेवसूरींश्च प्राणमन् प्रेमपूरिताः ॥१२॥
ताभ्यामुक्तामवोचं च वाचं वाचंयमेशितुः । पुरतः प्रीतिकर्त्री ते पत्राणि च ददुः करैः ॥१३॥
श्रुत्वा सूरीश्वरो वार्तां तत्पत्राणि प्रवाच्य च । ह्यमोदत निर्द्वन्द्वो जयो द्वन्द्वक्षयस्सताम् ॥१४॥
( अथवा–ह्यमोदत निर्द्वेषो जयो द्वेषक्षयः सताम् –इति पाठः )

---

८–सर्वजनीना सर्वजनेषु प्रसिद्धा । पारम्परीणा परम्परया प्राप्ता । सर्वपथीनिका सर्वपथीना एव सर्वपथीनिका सर्वपथिषु अव्याहता सर्वजिनधर्ममार्गेषु अव्याहता इत्यर्थः । सर्वजनीना सर्वपथीना–इत्युभयत्र प्रसिद्धाव्याहतयोर्जनपथोर्णित्वं वा वक्तव्यं इति वार्तिकात् खप्रत्ययः । पारम्परीणा इत्यत्र युगपरम्पराह्वां भवनं प्राप्तसमूहे ख इति खः ।

९–आयातात् इति या प्रापणे लोटः तातङादेशे रूपं । आयानीति इण् गतौ आङ्पूर्वः इत्यस्य लोटः उत्तमपुरुषस्य मेर्निरिति मेर्नि इत्यादेशे आडुत्तमस्य पिच्चेति आडागमे रूपम् ।

११–उभौ इत्यत्र श्रीविजयदेवसूरिश्रावकसमुदायापेक्षया सागरपक्षीयश्रावकसमुदायापेक्षया च द्विवचनम् ।

१३–ताभ्यां सागरपक्षीयसूरिकथितां सान्तीदासकथितां च वाचं वचनं । वाचंयमेशितुः श्रीविजयदेवसूरिगुरोः पुरतोऽग्रे ।

मेदिनीतटसङ्घोऽपि श्रुत्वा वार्तामममोदत । तैरुक्तां श्रीगुरूक्तां च वियुक्तां द्वेषभाषया ॥१५॥
परोपकारपरप्रीतिरतिनिश्चितचेतसा । प्रतिष्ठे नाथ तिष्ठानि सङ्घोऽभाणीति सूरिणा ॥१६॥
सुमुहूर्तं समालोक्य पुरान्मेदतटाभिधात् । प्रातिष्ठत च सूरीन्द्रः सहस्रनरसंयुतः ॥१७॥
किष्किन्धाख्यपुरे पूर्वं, ग्रामे च श्रीबलुन्दके । पुर्यां श्रीजयतारिण्यां, ग्रामे चाङ्गे बुकाभिधे ॥
ग्रामे रायपुरे, ग्रामे मुरडावासनामके । तथा च वगडीग्रामे, श्रीसोजितपुरे वरे ॥१९॥
ततः श्रीआउयाग्रामे, ग्रामे श्रीषयरुयाभिधे । मञ्जुले धामलीग्रामे, पल्लिकापत्तने ततः ॥२०॥
श्रीमद् गुंदवचग्रामे, श्रीवींझेवाभिधे तथा । नाडूलनाम्नि च द्रङ्गे, नडुलाई पुरे पुनः ॥२१॥
श्रीघाणेराभिधे ग्रामे, वरे श्रीसादडीपुरे । श्रीसूरीन्द्रः समागच्छद् विहरन्नुत्सवैः क्रमात् ॥२२॥
—पञ्चभिः कुलकम् ।

अस्मिन्नवसरेऽथाऽत्रोदयपुरमहाजनः । पुनर्नागपुरादायान्नमस्कर्तुं महाजनः ॥२३॥
उभावाह्वयतां सूरिं विज्ञप्यैवं कृपां कुरु । पर्युषितं चतुर्मासीं सर्वथादृष्टपूर्विणौ ॥२४॥
सूरिः प्राहेति तौ वादं भंक्तुमाकारयन्त्यमी । मामतो नागतिर्मेऽर्हा सन्तीदासश्च सागराः ॥२५॥
ततो राणपुरे देवांस्ताभ्यामन्यैश्च संयुतः । अभिवन्द्य कृतास्तोकव्ययौ तौ स व्यसर्जयत् ॥२६॥
ततः प्रस्थित आनन्दसाधुवृन्दविराजितः । मुडाडाभिध सद्ग्रामे वाहलीग्रामके तथा ॥
ततः पावाभिधे ग्रामे, ग्रामे च कमलाभिधे । ततश्च थामलाग्रामे, ग्रामे आहुरिनामके ॥२८॥
एतेषु च विचालेषु ग्रामेष्वन्येषु भूरिषु । विचरन् क्रमतः शश्वत् क्रियमाणमहोत्सवः ॥२९॥
चेत उत्पन्नसद्भावैः प्रतिग्रामं बहुव्ययैः । श्रीसूरिं प्राप्यत श्राद्धैः श्रीजाबालपुरं प्रति ॥३०॥
—अष्टभिःकुलकम् ।

आह्वानाय समागच्छन् श्राद्धाः स्वस्य च तस्य ये । श्रीमदहम्मदावादं प्रत्यमुञ्चत्ततः स तान् ॥

---

२४— उभौ उदयपुर—नागपुर—महाजनौ सूरिं आह्वयतां । किं कृत्वा ? एवं विज्ञाप्य एवमिति किं—कृपां कुरु । कथंभूतौ उभौ सर्वथा अदृष्टपूर्विणौ ।

२५—सूरिः, तौ उदयपुर—नागपुर—महाजनौ प्रति इति प्राह ।

२६—सः श्रीविजयदेवसूरिः तौ उदयपुरनागपुरमहाजनौ व्यसर्जयत् । कथंभूतौ तौ कृताऽस्तोकव्ययौ ।

३१—सः श्रीविजयदेवसूरिः । ततः श्रीजावालपुरे आगमनानन्तरं स्वस्य आत्मनः, चः पुनस्तस्य सागरपक्षीयस्य ये श्राद्धाः आह्वानाय समागच्छन् तान् श्रीमदहम्मदावादं प्रति अमुञ्चत् पश्चात्प्रेषयत् इत्यर्थः ।

गत्वा तेऽपि ततस्तत्र सन्तीदासं न्यवेदयन् । विजयदेवसूरीन्द्रो जावालपुरमागमत् ॥३२॥
मुक्तिसागर आदाय भवन्तमभिगच्छतात् । अथवा–गुरुस्त्वदीय आदाय भवन्तमभिगच्छतात् ।
पोस्फुरीति सती शक्तिर्दातुं प्रतिवचो यदि ॥३३॥
सन्तीदासो वचः श्रुत्वा तेषामिति मनोहरम् । अवोचच्च गुरुं स्वीयं मुक्तिसागरनामकम् ॥३४॥
उत्सूत्रभाषकत्वाच्च श्रीसूर्युदितलोपनात् । तद्वचः कर्णयोः श्रुत्वा तद्वचःप्रहतोऽभवत् ॥३५॥
मुक्तिसागरनामा ज्ञो मुक्तिसागरनामभाक् । मुक्तिसागरनामोजःसंजातरसनादृषद् ॥३६॥
विजयदेवसूरीन्द्रनाममाहात्म्यतर्जितः । निरुत्तरवचःशक्तिर्नागच्छन्मुक्तिसागरः ॥३७॥
द्वौ भेदौ सागरो धत्ते विष-रत्नसमुद्भवात् । कलिकालस्य माहात्म्यात् सोऽधुनाऽस्त्याद्यभेदभाक् ॥

३२–तेऽपीति श्रीविजयदेवसूरिश्रावकाः सागरपक्षीयश्रावकाश्च ततः श्रीजावालपुरात् तत्र श्रीअहम्मदावादे ।

३५-३६–युग्मम्, व्याख्या–अयं मुक्तिसागरनामभाक् ज्ञः पण्डितः प्रतिवादी तद्वचःप्रहतः अभवत् । तस्य सान्तीदासस्य वचो वचनं श्रीविजयदेवसूरिर्वादी मदाहूतः त्वया सह वादं कर्तुं श्रीजावालपुरे आयातः अथ त्वमपि तेन सह वादं कर्तुं मया सह चल इत्येतल्लक्षणं, तेन प्रहतो निराकृत इव । तद्वचःप्रहतः संजात इत्यर्थः । किं कृत्वा ? तद्वचः कर्णयोः श्रुत्वा तस्य सन्तीदासस्य वचः श्रीविजयदेवसूरिर्वादी त्वया सह वादं कर्तुं श्रीजाबालपुरे आयात इति कर्णविषये श्रुत्वा । कथंभूतो मुक्तिसागरनामा ज्ञः? मुक्तिसागरनामभाक् । मुक्तिरेव सा लक्ष्मीस्तस्या गरनाम विषनाम भजतीति मुक्तिसागरनामभाक् । मुक्तिलक्ष्म्याः विषनाम समान इत्यर्थः । यथा अन्यस्यापि सज्जनस्य दुराशयः प्रतिकूलभाषी पुरुषो विषोपमो भवेत्तथा मुक्तिसागरोऽपि प्रतिकूलवादी प्रतिवादी मुक्तिलक्ष्म्या विषोपमानो जात इति भावः । पुनः कथंभूतो मुक्तिसागरनामा ज्ञः? मुक्तिसागरनामोजःसञ्जातरसनादृषद्–मुक्तिरेव सा मुक्तिसा मुक्तिलक्ष्मीः तामस्यति क्षिपति नाशयति यत्तत् मुक्तिसाः–मुक्तिप्राप्तिनिषेधकमित्यर्थः । ईदृशं यद्गरमिव विषमिव यत् नाम स मुक्तिसागरनामा; अथवा अग इव पर्वत इव राजते यत्तत् अगरं पाषाणसदृशं मुक्तिसाश्च तत् अगरं च मुक्तिसागरं । एवंविधं यन्नाम तस्य यत् ओजस्तेजस्तेन संजाता रसना दृषद् यस्य सः, मुक्तिसागरनामोजःसंजातरसनादृषद्–मुक्तिलक्ष्मीविनाशकविषप्रायपाषाणप्राय नामप्रभावसंजातजिह्वापाषाण इत्यर्थः । असु क्षेपणे दिवादिः परस्मैपदी, क्विपि मुक्तिसाः । ओजो दीप्तिप्रकाशयोः अवष्टम्भे बले धातौ तेजसीति हैमानेकार्थः । कस्मात् ईदृशो जातः इत्याह–उत्सूत्रभाषकत्वात् । चः पुनः श्रीसूर्युदितलोपनात् । श्रीसूरिणा श्रीविजयदेवसूरिणा उदितं उक्तं श्रीसूर्युदितं तस्य लोपनं उल्लंघनं तस्मात् ।

आद्यं भेदं समासाद्य वर्तन्ते सागराः कलौ । सागरा इति नामानः प्रोच्यन्ते साधवोऽप्यमी ॥
विजयदेवसूरीन्द्रसत्यवादिपराजिताः । सागरा इत्यकथ्यन्त तत्प्रतीपा हि साधवः ॥४१॥
अन्त्यं भेदं समासाद्य विद्यन्ते सागरा हि ये । सागरा इति नामानः प्रोच्यन्ते तेऽपि साधवः ॥
विजयदेवसूरीन्द्रकथिताज्ञाविधायकाः । ते सर्वेषामुपादेया इव रत्नसमुच्चयाः ॥४३॥
अथवा सागराः प्रोक्ता द्विविधाः पूर्वसूरिभिः । केचित् मृष्टास्तथा क्षाराः केचिदिति जगत्स्थितिः ॥
आदृताः सूरिणा ये ते मृष्टा–अन्येऽन्यथाविधाः । मृष्टाः क्षारा अगस्त्येन पीतास्त्यक्ता इवाऽभवन् ॥
सूरिप्रतापसन्तप्तो निश्शक्तिर्मुक्तिसागरः । काकनाशं ननाशेव तस्थौ तत्रैव निष्प्रभः ॥४६॥
अथ श्रीभिन्दिमालादिद्रङ्गवासिमहाजनाः । संरक्षितुं चतुर्मासीं श्रीसूरिं समाह्वयन् ॥४७॥
इयता च समागच्छन् वींझेवाद्रङ्गवासिनः । संभूय श्रावकाः सर्वे निश्चित्याङ्गीकृतं ह्यदः ॥४८॥
अन्ये सभ्या यदीभ्याश्च श्रावका द्रङ्गवासिनः । रक्षिष्यामश्चतुर्मासीं तथाप्यत्र वयं गुरुम् ॥४९॥
प्राहुः सूरिं प्रणम्यैवं चतुर्मासीं गुरो कुरु । वयं ग्राम्याः क्व चास्माकं त्वत्पदाब्जरजोऽन्यतः॥५०॥
तीर्थं श्रीवरकाणाख्यं वन्दस्व चिरमिन्द च । त्वदीयाः सेवकाः स्मो नः कृतार्थान् कुरु च ध्रुवम् ॥
भिन्दिमालादिकद्रङ्गवासिनः श्रावकास्तदा । तूष्णींशीला विलक्षाश्च व्यराजंश्चित्रिता इव ॥५२॥
विज्ञाय निश्चयं तेषां चातुर्मासकरक्षणे । तूष्णीकः सूरिरप्यास्थादङ्गीकृत्य च तद्वचः ॥५३॥
न विधास्ये चतुर्मासीं कथयिष्यामि चेदिति । एते दुःखं करिष्यन्ति यद्ग्राम्या नेति तिष्ठति
( –यद्ग्राम्या न वसत्यतः–पा० ) ॥५४॥ युग्मम् ।
श्रावकान् कांश्चिदापृच्छ्य प्रमोच्यैव च कांश्चन । प्राप्नोत् प्रस्थाय वींझेवानगरं सह तैर्गुरुः ॥
सूरिः पर्यवसत्तत्र चतुर्मासीं महोत्सवैः । प्रीणयन् श्रावकान् धर्मान् प्रणयन् प्रणयाश्रयान् ॥५६॥

इत्थं श्रीविजयादिदेवगुरुणा सन्दब्धमुत्साहतो,
विद्वेषिप्रतिवादिनां परिभवं दौर्गत्यविध्वंसकम् ।

---

४८–अदः इति किं इत्याह–अतो अनु अस्मात् पश्चात् त्वत्पदाब्जरजः त्वच्चरणकमलरेणुः अस्माकं क्व न कदापीति भावः ।

५१–इदि परमैश्वर्ये भ्वादिः परस्मैपदी, लात्वाशिषि लिङ् लोटौ इति लोटो मध्यमपुरुषैकवचने, सेर्ह्यपिच्चेति सेर्हौ, अतोहेरिति हेर्लुकि इन्देति सिद्धिः ।

५५–कांश्चित् श्रावकान् मन्त्रिजयमल्लादि–जाबालपुरवासिनः, कांश्चन श्रावकान् भिन्दिमालादिद्रङ्गवासिनः । तैः सह वींझेवाश्रावकैः सह ।

५६–तत्र वींझेवानगरे प्रणयाश्रयान् प्रेममन्दिरान् प्रणयः प्रेमयाच्ञयोरिति हैमानेकार्थः ।

यं श्रीवल्लभपाठकः समदृभद् भूमण्डले विश्रुतं,
श्रुत्वा तं सुकृते भवन्तु भविकाः सान्द्रप्रतिज्ञाः सदा ॥५७॥

इति श्रीबृहत्खरतरगच्छीय श्रीजिनराजसूरिसन्तानीय पाठकश्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराज पातशाह श्रीअकब्बरप्रदत्तजगद्गुरुबिरुदधारक श्रीहीरविजयसूरीश्वरपट्टालङ्कार पातिशाहिश्रीअकब्बरसभासंलब्धदुर्वादिजयवाद भट्टारक श्रीविजसेनसूरीश्वरपट्टपूर्वाचलसहस्रकरानुकारि पातिशाहि श्रीजिहांगीरप्रदत्त महातपाबिरुदधारि श्रीविजदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरिविरचित-प्रतिवादपराभववर्णनो नाम एकादशः सर्गः ॥११॥

# द्वादशः सर्गः

अथ श्रीफलसद्वल्ली मल्लीवास्ति विलासिनाम् । श्रीपल्लीसुपुरी पल्लीपुरी भल्लीव पूःस्त्रियाम् ।
नाथते तु जगन्नाथो जगन्नाथ इवान्यथः । महीनाथोऽमहीनार्थोपचितश्रेयसां पथः ॥२॥
वसन्तस्तत्र भास्वन्तौ श्रीमड्डुङ्गरभाखरौ । भ्रातरौ प्रातरौदार्यात् प्रात ईहितमर्थिनाम् ॥३॥
संखवालकुलोल्लासिकमलाकमलापती । अतो विलसतो लक्ष्म्या द्विरूपौ तौ कलानिधी ॥४॥
तौ श्रीमोटिलसत्पुत्रौ जगन्मान्यौ विराजतः । जगन्नाथ-महीनाथमन्त्रिणौ राज्यधारिणौ ॥५॥
भूजानी तौ च भुञ्जानौ भोग्यान् भोगाननेकधा ।
कुर्वाणौ च सदा धर्मान् आस्तां लोकंपृणौत्तमौ ॥६॥
एकदाऽनेकदातारौ सदादानान्यनेकशः । ददतौ ददतो लोकानन्यान् वीक्ष्येत्यनिन्दताम् ॥७॥
इतीति किं तदाह–सदादानं जना अन्ये ददत्यधिकताकृते ।
आवाभ्यामावयोः क्वापि कदाप्यधिकतात्र न ॥८॥
विचिन्त्यैवं च निश्चिन्त्य चैत्यशृङ्गस्य चोपरि । कामकुम्भमिव स्वर्णकुंभं स्थापयतः स्म तौ ॥
श्रीकल्याणमयं कुंभं श्रीकल्याणमयं महत् । [ अत्र चः पाद पूरणे ।
प्रस्थाप्य पार्श्वनाथस्य श्रीचैत्यशिखरोपरि ॥१०॥
कुण्डलीमण्डलीराज्यमधुधूल्यालिसंचिताः । महाजनान् प्रभोज्यैव प्रदातां रूपकाणि तौ ॥११॥

---

१–सद्वल्ली कामलता मल्लीवेति केतकीति भाषाप्रसिद्धेव । श्रीपल्लीसुपुरी श्रीपल्लीव श्रीपल्ली लक्ष्मीग्रामतुल्या इत्यर्थः । सा चासौ सुपुरी चेति श्रीपल्लीसुपुरी । पल्लिस्तु ग्रामके कुट्यां इति हैमानेकार्थः ।

२–नाथते ऐश्वर्यं भुनक्ति–नाथृङ् उपतापैश्वर्याशीःषु चेति हैमधातुपाठः । आत्मेनपदी । अत्र श्रीपल्लीपुर्यां इत्यर्थः । अमहीनार्थोपचितश्रेयसां पथः । अमो रोगः स इव अमः क्षयस्तेन हीनः अमहीन अक्षय इत्यर्थः । स चासौ अर्थश्च द्रव्यं तेन उपचितानि पुष्टानि यानि श्रेयांसि अमहीनार्थोपचितश्रेयांसि तेषां पथो मार्गः । पथः अकारान्तोऽपि मार्गपर्यायः ।

३–तत्र पल्लीपुर्यां भास्वन्तौ दीप्तिमन्तौ अथवा भास्वन्तौ इव भास्वन्तौ सूर्योपमानौ इत्यर्थः । अत्र चकारस्य शेषात्; चः पुनः प्रातः प्रभाते औदार्यात् अर्थिनां ईहितं वाञ्छितं प्रातः पूरयतः सूर्यावप्येवं सूर्योऽपि प्रातः औदार्यात् महत्त्वात् उदयानन्तरं अत्यंततेजस्वित्वात् अर्थिनां ईहितं प्रातः ।

११–रूपकाणि पीरोजीति भाषाप्रसिद्धानि नाणकानि । तौ डूंगरभाषरौ भ्रातरौ ।

विहरन्नन्यदा सूरिरायान् स्वर्णगिरं प्रति । मार्गान्तरालवर्तित्वादायाच्छ्रीपल्लिकापुरीम् ॥
जीर्णोद्धारे महत्पुण्यमिति सूरिरुपादिशत् । श्रावकान् सुकृतं श्रोतॄन् सत्सदः सत्सदः सदः ॥
इत्युपादिश्य सूरीन्द्रस्ततः प्रास्थत हर्षतः । एकत्रावस्थितिर्युक्ता यतीनां न कदापि यत् ॥१४॥
अथैकत्रोपविष्टौ तौ ध्यायतः स्मैकदा हृदः । डूंगरभाखरेत्याख्या सर्वाद्रीणां श्रुता भुवि ॥
अतो विशेषभाषायां प्रवर्तेत तदा वरम् । डूंगरभाखरेत्याख्या जगदेकप्ररूपिका ॥१६॥
कर्तव्यात्सर्वलोकानां सर्वलोकैः कृतादपि । धर्मात् साद्भुतधर्मं चेत् करवाव तदा भवेत् ॥१७॥
श्रीमेरुगिरिनामानावावां ख्यातौ सहोदरौ । कारयाव मरौ मेरुं चैत्यं ज्ञापयितुं जनान् ॥१८॥
उद्धारयतां तौ हि विचिन्त्येति स्वचेतसि । नवलक्षाभिधं चैत्यं जीर्णं तन्वा न तेजसा ॥१९॥
नवलक्षाणि रूप्याणि लगन्त्यस्य विधापने । नवलक्षमतो नाम चैत्यास्यास्य भुवि श्रुतम् ॥२०॥
प्रतिमा पार्श्वनाथस्य कारितेहितपूरिका । ताभ्यां कामलतेवेषा सत्फणा नवपल्लवा ॥२१॥
रचितं स्वर्णरत्नौघैर्यशःस्तम्भमिवोन्नतम् । तौ न्यवेशयतां दण्डं चैत्ये ध्वजविराजितम् ॥२२॥
सुवर्णकलशं चैत्यशृङ्गस्योपरि सुन्दरम् । प्रत्यष्ठापयतां तौ तत् तदा मेरुरिव व्यभात् ॥२३॥
मेरुः सुमेरुरित्याख्यां बिभ्राणे ते व्यराजताम् । आकारे पञ्चमेरूणामबुध्येतां च सज्जनैः ॥२४॥
नवपल्लवनामायं पार्श्वनाथः प्रभाववान् । अभवद्भवदैश्वर्यप्रथितः पृथिवीतले ॥२५॥
निष्पन्ने पार्श्वचैत्येऽपि पार्श्वचैत्येप्यथाद्भुते । प्रतिष्ठां न विना पूजा सत्प्रभावेपि तद्द्वये ॥२६॥
अतोऽथ कारयावावां प्रतिष्ठां श्रेष्ठनिष्ठया । श्रीसूरीश्वरमकार्ये श्रीवींझेवापुरस्थितम् ॥२७॥

---

१२—आयान्—या प्रापणे, आङ् पूर्वः शतृप्रत्ययान्तः आगच्छन् इत्यर्थः प्रथमः। द्वितीयस्तु आयादिति अनद्यतने लङ् इति लङः प्रथमपुरुषैकवचनप्रयोगः आगच्छदित्यर्थः ।

१३—सुकृतं श्रोतॄन्—न लोकाव्ययनिष्ठाखलर्थतृनामेति श्रोतॄन् इत्यस्य तृन्निति शीलार्थेतृन् प्रत्ययान्तत्वप्रयोगात् । सुकृतमिति द्वितीया । सत्सदः पद्लृविशरणगत्यवसादनेषु भ्वादौ, ज्वलादिः परस्मैपदी । सत्सु साधुलोकेषु सीदन्तीति सत्सदः साधुलोकसेवकास्तान् । सतां पण्डितानां पूजितानां वा राजादीनां सदांसि सभाः तेषु सीदन्तीति सत्सदः पण्डितसभोपवेशकाः राजसभोपवेशका वा इत्यर्थः । सत्सद इत्यत्र सत्सदस्सद इत्यत्र च सत्सू द्विषद्रुहेति क्विप् सदः शब्दः स्त्रीक्लिबलिङ्गः।

१९—तन्वा शरीरेण, अत्र तनू शब्द ऊङन्तः । तन्वादेर्वेति वैकल्पिकस्य ऊङः प्राप्तेः ।

२२—तौ डुंगरभाखरौ भ्रातरौ तत् नवलक्षं नाम चैत्यं ।

२४—ते श्रीपल्ल्या मध्यस्थित-बहिःस्थितचैत्ययोर्द्वयं व्यराजतां । चः पुनः सज्जनैः पञ्चमेरूणामाकारे अबुध्येताम् ।

२७—श्रेष्ठनिष्ठया अत्र निष्ठाशब्दः उत्कर्ष १ व्यवस्था २ निष्पत्ति ३ निर्वाह ४ व्रतानां पञ्चानामेषां पर्यायः । निष्ठोत्कर्षव्यवस्थयोः क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते इति हैमः ।

विचिन्त्यैवमुभावेतौ श्रीमड्डुङ्गरभाषरौ । भ्रातरौ संघसंयुक्तावाह्वातुं तमगच्छताम् ॥२८॥
प्रणम्य चरणौ सूरेः पुरस्तादुपविश्य च । अवक्तां व्यक्तवद् व्यक्तवाचया तौ गुरूत्तमम् ॥२९॥
नवपल्लवपार्श्वार्हत्प्रतिमां प्रतितिष्ठतात् । स्वच्छेन विधिनातुच्छगच्छेशागच्छ सत्वरम् ॥३०॥
श्रीसंघं सूरिरप्राक्षीत् वींझेवापुरवासिनम् । ततो विगतसन्तापः सन्तापं चेतसो हरन् ॥३१॥
भवन्मनोरथः पूर्णश्चतुर्मासीविधानतः । अथ स्याद्भवदाज्ञा चेत् प्रतिष्ठै पल्लिकां प्रति ॥३२॥
मामाह्वयत एतौ यत् श्रीमड्डुंगरभाषरौ । भ्रातरौ श्रीप्रतिष्ठायै श्रीपल्लीसंघसंयुतौ ॥३३॥
अवोचच्च ततः श्रीमद्वींझेवासंघ आदृतः । आह्वास्यतां न यद्येतौ नाऽचालयिष्यमन्यथा ॥३४॥
प्रतिष्ठाया महान् लाभः प्रतिषेधानि तं कथम् । अतः सूरे प्रतिष्ठस्व प्रतिमां प्रतितिष्ठ च ॥३५॥
अचलत्स चलत्कल्पवृक्षकल्पो द्युकल्पधीः । संकल्पपूरणायैव तयोर्नान्यात्र कल्पना ॥३६॥
सूरिः प्राप्नोत् पुरीं पल्लीं सदातोद्यध्वनिर्दिवम् । यशस्तस्य च सज्ज्योतिरिव विश्वं विवस्वतः ॥
अथाकारयतामन्यान्नागरान्नगरादितः । तौ सन्तौ च सतः श्राद्धान् ग्रामीणानपि चादरात् ॥
चतुर्दिग्भ्यः समाजग्मुः श्रावका जलदा इव । दातुं लातुं च साराणि नीराणि सुयशांसि च ॥
षोडशस्य शतस्याथ षडशीतितमेऽब्दके । वैशाखशुक्लपक्षस्य सुमुहूर्ते दिनेऽष्टमे ॥४०॥
प्रत्यतिष्ठद्वरिष्ठात्मा श्रेष्ठेन विधिना गुरुः । नवपल्लवपार्श्वाऽर्हत्प्रतिमां प्रतिमाग्रिमाम् ॥४१॥
अस्मिन्नवसरे मन्त्री जयमल्लः समागमत् । सौधर्मेन्द्र इव द्रष्टुं प्रतिष्ठां तौ च वन्दितुम् ॥४२॥
प्रतिष्ठा-प्रतिमा-चैत्यं निरीक्ष्येति च सोऽवदत् । अधिकाधिकमाहात्म्यं समकारयतामिमौ ॥

---

२९–अवक्तां–वच् परिभाषणे इत्यस्य अनद्यतने लङोति लङि,प्रथमपुरुषद्विवचनं । व्यक्तवत् पण्डितवत्, व्यक्तवाचया स्पष्टभाषया । अत्र वाचाशब्दः हलन्ताद्वेति वैकल्पिके टापि टाबन्तः । 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः । आ पश्चैव हसान्तानां यथा वाचा निशा दिशा॥' इति वचनात् ।

३०–प्रतितिष्ठतात् आशिषि लोटो मध्यमपुरुषस्य तुह्योस्तातङ्ङाशिष्यऽन्यतरस्यामिति हि स्थाने वैकल्पिके तातङ् इत्यादेशे रूपम् ।

३६–सः श्रीविजयदेवसूरिः अचलत् । किं विशिष्टः ? तयोः डुंगरभाषरयोर्भ्रात्रोः संकल्पपूरणायैव मनोरथासिद्धये एव चलत्कल्पवृक्षकल्पः जङ्गमकल्पवृक्षसमानः । कथंभूतः द्युकल्पधीः दिवससमानबुद्धिः ।

३९–श्रावकाः आजग्मुः । किं कर्तुं ? साराणि द्रव्याणि दातुं, लोकेभ्य इति गम्यते । पुनः किं कर्तुं ? सुयशांसि लातुं । के इव ? जलदा इव । किं कर्तुं ? नीराणि दातुं । चः पुनः सुयशांसि लातुं । मेघाः सर्वतो दिशः सम्यग् ववर्षुरिति सुयशांसि लातुमिति पदं युक्तम् ।

४३–प्रतिष्ठाप्रतिमाचैत्यमित्यत्र समाहारद्वन्द्वत्वादेकवचनम् ।

अस्मिन्नवसरे लोकाः प्राक् पश्चाच्चेदृशाः किल । प्रभावात् श्रीगुरोः श्रीमत् पार्श्वनाथस्य चाभवन्॥
पीवरोरव इच्छंति वामोरव उपासते । लक्ष्मणोरव एधन्ते करभोरव ईशते ॥४५॥
ययोः सेवां समीपं च सद्गुणस्तवनात् श्रिया । प्रसादाद् राज्यमद्वन्द्वं निर्लोमकरभोपमम् ॥
पीवरोर्वश्च वामोर्व्वः करभोर्वश्च काश्चन । लक्ष्मणोर्वः कलादक्षाः रंजिताः प्रीतचेतसः ॥४७॥
लक्ष्मीनाम्न्यः सुनामानो रंभानामाश्च सर्वदा । आस्तिक्यमतयोऽर्हन्तमास्तिक्यः स्तुवते च तम् ॥
शफोर्वस्तानं जायन्ते संहितोर्वश्च कर्हिचित् । यद् गुणान् याः प्रगायन्ति स्त्रिय इत्यब्रुवंस्तदा ॥
एवं सिद्धे प्रतिष्ठायाः कार्ये तौ भ्रातरावथ । कामकुंभाविवाभीक्ष्णं समभोजयतां जनान् ॥५०॥
उचितानि प्रभूतानि भोज्यानि नवनवानि हि । कुण्डलीप्रभृतीनीष्टमृष्टानि स्वदूनान्यहो ॥
कान्तविक्रान्तसंघातयुक्तं श्रीजयमल्लकम् । अथवा–सहस्रजनसंयुक्तं मन्त्रिश्रीजयमल्लकम् ।
निमन्त्र्यात्याग्रहं कृत्वा पादजाहं प्रणत्य च ॥५२॥ त्रिभिर्विशेषकम् ।

४४–अस्मिन्नवसरे प्रतिष्ठाकरणानन्तरकाले ईदृशाः । कीदृशा इत्याह–

४६–पीवरौ ऊरू सक्थिनी येषां ते पीवरोरवः । वामौ मनोज्ञौ ऊरू येषां ते वामोरवः । लक्ष्मणौ लक्ष्मीवन्तौ उरू येषां ते लक्ष्मणोरवः । लक्ष्मीवान् लक्ष्मणः श्लील इति हैमकोषः । करभवत् ऊरू येषां ते करभोरवः । अर्थयोजनात्वेवम् । पीवरोरवः ययोः श्रीनवपल्लवपार्श्वनाथ श्रीविजयदेवसूर्योः । सेवां इच्छान्ति ययोः इति पदस्य सर्वत्र संबंधात् । वामोरवो ययोः समीपं उपासते । लक्ष्मणोरवः ययोः सद्गुणस्तवनात्, श्रिया लक्ष्म्या एधन्ते । करभोरवः ययोः प्रसादात् राज्यं ईशते ऐश्वर्यं कुर्वन्तीत्यर्थः । कथंभूतं राज्यं ? अद्वन्द्वं संग्रामवर्जितम् । सर्वथा वैरिणां अभावात् । पुनः कथंभूतं राज्यं अत एव निर्लोमकरभोपमम् ।

४७–४८युग्मम्–अर्हन्तं श्रीनवपल्लवनामानं श्रीपार्श्वनाथजिनं । चः पुनः तं श्रीविजयदेवसूरिं। पीवरोर्वः वामोर्वः लक्ष्मणोर्व इत्येतेषु त्रिषु संहितशफलक्ष्मणवामादेश्चेति अनौपम्येऽपि स्त्रियामूङ् करभोर्व इत्यत्र उरूत्तरपदादौपम्ये इति ऊङ् । लक्ष्मीनाम्न्या इत्यत्र अन उपधालोपिनोऽन्यतरस्यामिति बहुव्रीहौ वैकल्पिको ङीप् । सुनामान इत्यत्र रम्भानामा इत्यत्र च डाबुभाभ्यामन्यतरस्यामिति बहुव्रीहौ वैकल्पिके डापूप्रत्ययाभावे प्रथमा बहुवचनं । वैकल्पिके डाप् प्रत्यये च रम्भानामा इति प्रथमाबहुवचनम् ।

४९–तदा प्रतिष्ठाकरणानन्तरकाले स्त्रिय इत्यब्रुवन् । इतीति किं । याः यद्गुणान् श्रीपार्श्वनाथ-श्रीविजयदेवसूरिगुणान् प्रगायन्ति ताः । शफोर्वः संश्लिष्टसक्थियुक्ता न जायन्ते । चः पुनः कर्हिचित् संहितोर्वः मिलितसक्थियुक्ता न जायन्ते । शफोर्वः संहितोर्व इत्युभयत्र संहितशफलक्ष्मणवामादेश्चेति ऊङ् प्रत्ययः । शफशब्दः श्लिष्टपर्यायः ।

ततस्तत्सर्वसंभूतश्रीसंघनिचयाय तौ । रूप्याम्बराणि चारूणि प्रादातां प्रीतचेतसौ ॥५३॥
आहूतान् श्रावकान् सर्वान् तौ व्यसर्जयतां ततः । इति विज्ञपयन्तौ च समायायुश्चिरायुषः ॥
आयाताः परदेशेभ्यः श्राद्धाः सच्छ्रद्धयान्विताः। आह्वयन्ति चतुर्मासं कर्तुं सूरीश्वरं तदा ॥५५॥
मन्त्रि श्रीजयमल्लोऽपि वाग्मी वाग्मीनमित्यवक् । एहि कर्तुं चतुर्मासं सूरे स्वर्णगिरौ ध्रुवम् ॥
सूरिः प्राह महामन्त्रि श्चतुर्मासीं व्यधां पुरा । अभवद्वर्षयोर्युग्मं महालाभश्च ते च मे ॥५७॥
प्रतिष्ठाजिनबिम्बानां कर्तव्यास्तीति सोऽवदत् । तीर्थे शत्रुञ्जये चैत्ये चैत्यस्थापनहेतवे ॥५८॥
अत आव महाभाव समभावमहात्मसु । प्रतितिष्ठ यतिश्रेष्ठ जिनानां प्रतिमाततिम् ॥५९॥
भवितायं महान् लाभः पुनरन्योऽपि कश्चन । इत्याग्रहामि गृह्णीयाः प्रतिष्ठापुण्यमग्रणि ॥६०॥
इत्यवादीत्ततः सूरिः श्रीजयमल्लमन्त्रिणम् । प्रतिष्ठास्यामि बिम्बानि चतुर्विंशतिमर्हताम् ॥६१॥

इत्थं श्रीविजयादिदेवसुगुरुः श्रेष्ठप्रतिष्ठां व्यधात्,
श्रीमडुङ्गरभाखरप्रविहिताऽर्हच्चैत्यसच्चैत्ययोः ।
सिद्धान्तप्रतिपादितेन विधिना पुष्पावतीपत्तने, (श्रीपल्लिकायां पुरि)
श्रीश्रीवल्लभपाठकप्रपठितप्रेष्ठप्रतिष्ठोत्सवाम् ॥६२॥

इति श्रीबृहत्खरतरगच्छीय श्रीजिनराजसूरिसन्तानयि पाठकश्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराज पातशाह श्रीअकब्बरप्रदत्तजगद्गुरुबिरुदधारक श्रीहीरविजयसूरीश्वरपट्टालङ्कार पातिशाहिश्रीअकब्बरसभालब्धदुर्वादिजयवाद भट्टारक श्रीविजसेनसूरीश्वरपट्टपूर्वाचलसहस्रकरानुकारि पातिशाहि श्रीजिहांगीरप्रदत्त महातपाबिरुदधारि श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरिविनिर्मित-श्रीपल्लिकापुरी नवलक्षप्रासाद श्रीनवपल्लव पार्श्वनाथप्रतिष्ठाप्ररूपको नाम द्वादशः सर्गः ॥१२॥

५३—ततः श्रीसमस्तश्रीसङ्घभोजनानन्तरं मन्त्रिश्रीजयमल्लसुभदभोजनानन्तरं ग्रामीण-लोकभोजनानन्तरं चेत्यर्थः । तत्सर्वसंभूतश्रीसङ्घनिचयाय ते च निमन्त्रिताः परदेशश्रावकसङ्घाः ते च श्रीजयमल्लाद्याः श्रावकलोकास्ते च ग्रामीणाश्चेति त्रिभिर्द्वन्द्वे सरूपाणामेकशेषे इति ते । ते च ते सर्वसंभूतश्रीसङ्घाश्च तत्सर्वसंभूतश्रीसङ्घास्तेषां निचयस्तस्मै ।

५४—समायायुः समागच्छेयुः । या प्रापणे विधौ लिङः प्रथमपुरुषबहुवचनम् ।

५५—तदा प्रतिष्ठाकरणानन्तरकाले । ५५—वाग्मी सम्यग्भाषकः । वाग्मीत्ययं शब्दो द्विगकारवान् । ग्मिन् इति सूत्रेण ग्मिन् प्रत्ययान्तत्वात् । ग्मिन् इत्यत्र यो गकारः स प्रत्यये चेति सूत्रेण जायमानस्य अनुनासिकस्य निवृत्त्यर्थः । यदि तु मिनिरित्येवोच्येत तदा प्रत्यये चेति नित्यमनुनासिकः स्यात् ।

## त्रयोदशः सर्गः

अथातः प्राचलत्सूरिर्लौलसावान् निरालसः । ब्रह्मचर्यप्रतिष्ठादिधर्मकार्ये हि सत्कलः ॥१॥
नाश्लीलालीकजल्पाकसाधुशाली सुशीलवान् । शीलव्रतादिधर्मेषु साधुलोकान् प्रवर्तयन् ॥२॥
श्रीजाबालपुरं प्राप्नोत् सूरीन्द्रश्चन्द्रशीतलः । अभ्यायाज्जयमल्लोऽपि वन्दितुं तं च संघयुक् ॥३॥
विधायोत्सवमुत्साहाद् गीतातोद्यस्वनाद्भुतम् । नगरस्यान्तरे सूरिं जयमल्लः समानयत् ॥४॥
स आनयत् परां प्रीतिं स्वस्यान्येषां च मानसम् । एकस्य हर्षसम्प्राप्तावन्येषां किं न सुनृणाम् ॥
धन्योऽहमद्य संजातो निरवद्यमनोरथः । अर्हतां भविता चाथ प्रतिष्ठेष्टेत्यचिन्तयत् ॥६॥
पश्य प्रशस्यसूरीश प्रतिष्ठाश्रेष्ठवासरम् । सोऽप्यपश्यन् मुहूर्तं च युक्तो मौहूर्तिकैस्तदा ॥७॥
प्रथमाषाढपक्षस्य कृष्णपञ्चमवासरम् । भासुरं तीर्थकृद्विम्बप्रतिष्ठार्हं प्रवर्तते ॥८॥
इति प्राह धृतोत्साहः सूरिर्मौहूर्तिकान्वितः । मन्त्रिणं जयमल्लाख्यं श्रीसुवर्णगिरीश्वरम् ॥९॥
संजातरोमहर्षश्रीसंश्लेषविदुषो रुषा । देशेभ्यः समस्तेभ्य इभ्यः संघान् समाह्वयत् ॥१०॥
आयानुपरि तस्याह्वस्ते सङ्घा अन्यदेशतः । ग्रामीणाश्च स्वदेशस्य सर्वलाभाभिलाषिणः ॥११॥
सोऽथ श्रीजिनचैत्यानां प्रतिष्ठाया मुहूर्तकम् । असाध्नोद् गीतगानोद्यद्वाद्यध्वानं यथाविधि ॥
कृतप्रतिष्ठः सूरीन्द्रः समदीपिष्ठ शिष्टरुक् । निर्मापितप्रतिष्ठश्च मन्त्रीति जयमल्लकः ॥१३॥
तद्यथा–सद्वाससं शुभावासं वासं प्रादाद्गणेश्वरः । साधुभ्यः श्रावकेभ्यश्च पदव्रतविधायकम् ॥१४॥
मन्त्रीशः साधुलोकेभ्यः सद्वासांसि व्यहारयत् । आहारयद्वराहारं संघांस्तेभ्यो धनं त्वदात् ॥
षोडशस्य शतस्यास्मिन् षडशीतितमेऽब्दके । प्रथमाषाढपक्षस्य कृष्णे पञ्चमवासरे ॥१६॥
प्रत्यतिष्ठज्जिनेन्द्राणां प्रतिमाः प्रतिमाग्रिमाः । विजयदेवसूरीन्द्रः श्रीजाबालपुरे वरे ॥१७॥
निवृत्ते च तदा तत्र प्रतिष्ठाया महोत्सवे । मन्त्रिणं प्राह सूरीन्द्रः प्रचलानि त्वदाज्ञया ॥१८॥
मन्त्री प्राहाथ सूरीन्द्रं चतुर्मासं कुरु प्रभो । चालयानि नचाहं त्वां चतुर्मासीविधिं विना ॥१९॥
अङ्गीकृत्य तदा तस्य रुचिरं वचनाग्रहम् । संग्रहमिव वस्तूनां शस्तानामवसद्गुरुः ॥२०॥

---

१०–अत्र विदुषशब्दो विद्वत्पर्यायोऽकारान्त औणादिको ज्ञेयः। न रुट् अरुट् क्रोधाभावः सन्तोष इत्यर्थः । अत्र नञ्-अभावे तया अरुषा सन्तोषेण इत्यर्थः । ननु रुड् विरुद्धा अरुट् इत्यपि समासः स्यात् । सत्यं नात्रायं नञ्समासः । कथं अस्मिन् समासे अरुट् शब्दः क्षमा-पर्यायः स्यात् । न च तदानीं तस्य कस्याचिदुपरि कोपः, विना कोपं कथं क्षमेति अभावे एवायं नञ्-समासः ।

अकारयन्मुनीन् कांश्चित् तपः षष्ठाष्टमादिकम् । अवाहयच्च सद्योगं सिद्धान्तानां यथाविधि ॥
दिव्येन विधिना श्राद्धीरुपधानादिकं च सः । श्रद्धया वाहयद्धर्मं श्रद्दधानाः शिवप्रदम् ॥२२॥
व्रतं हरितकायादिप्रत्याख्यानमकारयत् । श्रावकानन्यलोकांश्च वन्दितुं स समागतान् ॥२३॥
श्रावयन् शुद्धसिद्धान्तमाचाराङ्गादिकं प्रगे । श्रावकान् मुनिनश्चासौ चतुर्मासं समाप्तवान् ॥
अवोचन्मन्त्रिणं सूरिरथातः प्रचलाम्यहम् । चतुर्मास्यभवत्पूर्णा नाथार्हावस्थितिर्मम ॥२५॥
प्राह मन्त्री तदा सूरिमा चैत्रीं तिष्ठ निश्चलः । चतुर्मास्यभवत्पूर्णा न पूर्णा मे मनोरथाः ॥२६॥
सूरिः स्वस्थमना अस्थात् साधुसाधुव्यवस्थया । कथनाकरणं दुःखं माभूदस्येति सद्धिया ॥२७॥
मेदिनीतटसद्रङ्गे हर्षोऽभवदथास्तिमान् । अस्तिमन्नायकः सङ्घनायकः सुखदायकः ॥२८॥
अजयज्जयवन्ताख्यः सुतस्तस्य सुताग्रणीः । अजयच्च जयं देवराजांगजमजोत्तमः ॥२९॥
साहलागोत्रविख्यातो वाघो नामास्ति अस्तिमान् ।
सोनानाम्नी सुता तस्य तस्य जायास्ति आस्तिकी ॥३०॥
आयुषः क्षयतः स्वर्गं जयवन्तोऽव्रजद् द्रुतम् । पत्नीसोहागदेव्यस्याशोचच्चित्ते चिराय च ॥३१॥
यौवने वयसि श्रेयान् विपद्येत पतिर्यदि । महद्दुःखं वरस्त्रीणां हा यास्यति कथं वयः ॥३२॥
(–धिक् संसारं शरीरिणः–इति वा पाठः )
कियत्यपि गते काले पत्युः शोके गतेऽपि च । विज्ञाय साथ संसारमसारं परमार्थतः ॥३३॥
दानं शीलं तपो मुख्यं धर्मकर्मपरायणा । कुर्वाणा वर्तते काग्रचित्ता सा पापभीरुका ॥३४॥
भव्या वपन्ति ये द्रव्यं क्षेत्रेष्वेतेषु सप्तसु । ते फलं किं लभन्ते हीत्यपृच्छद्गुरुमन्यदा ॥३५॥
तत्त्व प्राच्छातया प्रश्ने कृत इत्याह तत्वभृत् । जनैर्नांसि ध्रुवं धुन्वन् वितन्वन् प्रेममानसे ॥३६॥
तथाहि–तीर्थे १ तीर्थंकरे २ साधौ ३ भक्ति १निर्मलचेतसा ।
धर्मशास्त्रे रुचिः २ सत्या दया ३ दानं ४ सुपात्रके ॥३७॥
सत्यं वाक्यं ५ विवेकश्च ६ प्रशस्तास्तिकतामतिः ७ ।
आर्यदेशो ८ मनुष्यत्वं ९ दीर्घायू १० रोगहीनता ११ ॥३८॥

२१–उभयत्र श्लोके अवाहयदिति क्रियापदस्य ण्यन्तत्वात् नियन्तृकर्तृकस्य वहेरनिषेध इति निषेधात् । मुनीन् इत्यत्र द्वितीयश्लोके श्राद्धीरित्यत्र च कर्म । धम्मसारहीणमिति वचनात् गुरोर्धर्मकर्मणि प्रेरकत्वेन नियन्तृकर्तृकत्वसद्भावात् ।

२९–अज इव कृष्ण इव उत्तमः सर्वोत्तमत्वात् यः स अजोत्तमः । 'अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे ।' इति हैमानेकार्थे ।

३०–तस्य वाघानाम्नः सुता । तस्य जयवन्तस्य जाया परिणीता स्त्री अस्ति । अस्ति अस्तिमान्, अस्ति आस्तिकी इत्युभयत्र इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेति प्रकृतिभावः ।

उज्ज्वलं च कुलं १२ श्रेयः श्रेयोन्यायैरुपार्जिताः ।
सम्पदो १३ विपदाहीनाः परोपकृतिसत्कृताः ॥३९॥
त्रयोदश समाख्याता हेतवोऽमी मनीषिभिः ।
पुण्यानामर्जने नृणां मर्त्यलोके सुखप्रदाः ॥४०॥ चतुर्भिः कलापकम् ।

श्रुत्वा सोहागदेवीति श्रीगुरोर्वदनाम्बुजात् । सप्तक्षेत्रेषु सद्द्रव्यं वपति स्म त्रपावती ॥४१॥
सदादाने सदा दाने धनधान्याम्बरादिकम् । अर्थिभ्यः सा ददातीष्टं श्रेयसे श्रेयसेभृशम् ॥४२॥
ददाना सर्वदाभीष्टं धनधान्याम्बरादिकम् । अदृश्याप्याभवद्दृश्या कामधेनुरियं किमु ॥४३॥
अभ्यधुस्तां बुधा एवं तदा प्रमुदिता हृदि । यथावद् दृष्टवक्तारो यल्लोकाः कवयोऽपि च ॥४४॥
सम्यक्त्वपीवरी श्रीमदर्हत्सद्गुरुदृश्वरी । श्रीधीवरी व्यराजत्सा पातकावावरी तदा ॥४५॥
एवं प्रवर्तमाना सा चेतसीति व्यचिन्तयत् । प्रतिमा अर्हतां कान्ताः कारयाणि सुशिल्पिभिः॥
प्रतिमाकारणे पुण्यं निश्चित्येति विचिन्त्य च । आहूय शिल्पिनो दक्षान् प्रतिमाः सा व्यधापयत्॥
सुधर्मस्वामिसर्वीयप्रभृतीनां महाद्भुताम् । श्रीमद्विहरमाणानां विंशतेश्चैत्यविंशतिम् ॥४८॥
चतुर्विंशति बिम्बानि वर्तमानार्हतां पुनः । दृपत्स्फटिकसद्रीरीमयानि विविधानि हि ॥४९॥
—त्रिभिर्विशेषकम् ।

विधाय प्रतिमाः प्राहुः शिल्पिनस्तामिति स्फुटम् । निष्पन्नाः प्रतिमाः सन्ति यथेप्सितमथो कुरु॥
समाकर्ण्योभयाकर्णि सा तदा शिल्पिजल्पितम् । सद्यः प्रसद्य तद्योग्यं तेभ्योऽदात् पारितोषिकम्॥
आहूयान्यथ सूरीन्द्रं ताः प्रतिष्ठापयानि च । विना प्रतिष्ठां पूजा नो स्याद्दोषः पूजया विना॥५२॥
एवं विचार्य चातुर्यशौण्डीर्यौदार्यवर्यया । तयार्याण्यार्ययार्याणां प्रैषि प्रैष्यो विचक्षणः ॥५३॥

४२—सदादाने सत्रूकारेति भाषाप्रसिद्धे । सदा सर्वस्मिन् काले दाने त्यागे श्रेयसे कल्याणाय; पुनः श्रेयसे धर्माय ।

४५—सम्यक्त्वपीवरी सम्यक्त्वं पीतवती । पा पाने । श्रीमदर्हत्सद्गुरुदृश्वरी श्रीमदर्हत्सद्गुरून् दृष्टवती, श्रीधीवरी श्रियं धृतवती । डुधाञ् धारणपोषणयोः । अत्र त्रिषु अन्येभ्योऽपि दृश्यन्ते इति क्वनिप्, वनोर्चेति ङीप् प्रत्ययो रेफादेशश्च । पीवरी धीवरी इत्युभयत्र घुमा स्था गा पेति आकारस्य ईकारः। पातकावावरी पापापनेत्री ओणृ अपनयने अन्येभ्योऽपि दृश्यन्ते इति वनिपि प्रत्यये विड्वनोरनुनासिकस्यादिति णत्वस्य आत्वे वनोर्चेति ङीप्रत्ययो रेफश्चान्तादेशः ।

४६—सा सोनां नाम्नी । सुशिल्पिभिः शिलाकुट्टादिभिः । अत्र हृक्रोरन्यतरस्यामिति वैकल्पिककर्माभावे तृतीया । अथवा सुशिल्पिन इति पाठे कर्मापि वैकल्पिकं न दोषायेति ।

आवसन्त चतुर्मासीं श्रीसुवर्णगिरिं पुरम् । आकारयितुमानन्दकारकं सूरिपुङ्गवम् ॥५४॥
सोऽपि गत्वा ततो नत्वा श्रीसूरिचरणाम्बुजे । प्रादात्पत्रं पवित्रश्रि श्रीसूरीन्द्रकराम्बुजे ॥५५॥
सूरिः प्रवाच्य तत्पत्रं ज्ञातोदन्तोऽतिमोदतः । अवददूदनादित्थं सुवर्णगिरिसंघकम् ॥५६॥
श्रीमत्सङ्घसमस्ताघप्रतापसवितः सदा । सोनानाम्न्या इदं पत्रं श्राविकायाः प्रवाचय ॥५७॥
वाचयित्वाथ सङ्घस्स तत्पत्रं प्रीतिकर्तृकम् । प्रतिमानां प्रतिष्ठाया विज्ञप्तिप्रतिपादकम् ॥५८॥
समनुष्यत्तरां चित्ते तच्चित्त्वेनातिरञ्जितः । चातुर्येण च केनापि लिखनाज्जातकौतुकः ॥ युग्मम् ।
प्रतिष्ठाज्ञापकोदन्तं सङ्घो विज्ञाय चेतसि । श्रीसूरीन्द्रमिति प्राह प्राञ्जलिर्नतमस्तकः ॥६०॥
इतीति किं तदाह–यद्येतस्याः प्रतिष्ठार्थं नायास्यत् किल पत्रिका ।

नाचालयिष्यमेवातो यद्वियोगं सहे न ते ॥६१॥

तपःशमवरिष्ठस्व प्रतिष्ठस्व गरिष्ठधीः । न निषेधाम्यथो धर्मकार्यविघ्नं करोमि न ॥६२॥
अथ प्रातिष्ठत श्रेष्ठे मुहूर्ते मूर्तिमान् महान् । सद्धर्म इव सूरीन्द्रः श्रीजाबालपुरात्ततः ॥६३॥
प्रतिग्रामं प्रतिद्रङ्गं विचरन्नाचरन् वरम् । साध्वाचारं व्रतोच्चारं कारयन् श्रावकादिकान् ॥६४॥
मेदिनीतटसद्द्रङ्गं समवाप गणाधिपः । श्रुत्वा तमागतं सङ्घो नन्तुमभ्यागमत्तथा ॥६५॥
अभिवन्द्य पदाम्भोजे सह लात्वा च तं गुरुम् । नयति स्म मुदा सङ्घः स्वकीयं सदुपाश्रयम् ॥
तदा सङ्घोऽकरोद्दिव्यघनव्ययमहोत्सवम् । गुरोरागमने किं किं न कुर्युर्भविका जनाः ॥६७॥
अथ सोनाभिधा श्राद्धी प्रतिष्ठार्हं शुभं दिनम् । अपृच्छच्छ्रीगुरुं भक्त्या सर्वसङ्घसमक्षकम् ॥६८॥

---

५४–एवं विचार्येति युग्मव्याख्या लिख्यते–शौण्डीरः सत्त्ववान् तस्य भावः शौण्डीर्यं, सत्त्ववत्त्वमित्यर्थः । निरनुस्वारतालव्यचतुर्दशस्वरादिरयं । तया **सोनां** नाम्न्या अर्याण्या वैश्यजातिस्त्रिया वणिग्जातिस्त्रिया वणिजः पुत्र्येत्यर्थः । कथंभूतया तया ? अर्याणां अर्येया अर्याणां वणिग्जातिस्त्रीणां अर्येया स्वामिन्या । अर्याणी अर्या अत्र उभयत्र जातिवाचित्वात् 'अर्य-क्षत्रियाभ्यां वा स्वार्थे' इति वैकल्पिके ङीषि आनुकागमे च अर्याणी ङीषो अभावे आनुकश्च अभावे अजाद्यतष्टाबिति टापि अर्या अर्यः स्वामि वैश्ययोरिति निपातितः । स्यादर्यः स्वामिवैश्ययोरिति हैमानेकार्थः । एवं अर्याण्या अर्या अर्याणामिति । त्रिपु ह्रस्व एव अकारो ज्ञेयः । आवसन्तमिति-श्रीसुवर्णगिरिं पुरमावसन्तमित्यत्र उपाऽन्वऽध्याङ्वस इति आङ्पूर्वस्य वसतेराधारस्व श्रीसुवर्णगिरिं पुरमित्यस्य कर्म । चतुर्मासीमित्यत्र कालाध्वनोरत्यन्तसंयोगे इति कर्म ।

५९–समनुष्यदिति–तस्याः **सोनां नाम्न्याः** श्राविकायाः चित्त्वं ज्ञानत्वं मतित्वं वा तच्चित्त्वं तेन ।

६२–तपःशम इति–तपःशमौ एव वरिष्ठं स्वं धनं यस्य तत्सम्बोधनं हे तपःशमवरिष्ठस्व हे श्रीविजयदेवसूरे प्रतिष्ठस्व प्रचल । ष्ठा गतिनिवृत्तौ समवप्राविभ्यः स्थ इत्यात्मनेपदी ।

श्रीसूरीन्द्रस्तदा प्राह सोनाख्ये श्राविकेऽस्ति हि। प्रतिष्ठार्हं दिनं ज्येष्ठशुक्लपक्षत्रयोदशम् ॥६९॥
सुसामग्रीं प्रतिष्ठाया विधाय विधिवत्तदा। प्रतिमाः सूरिहस्तेन प्रतिष्ठापयति स्म सा ॥७०॥
प्रतिमाः प्रत्यतिष्ठत्ताः सूरिर्जातमहोत्सवम्। रूपकाण्यददाद्धर्षाद्भक्त्या संघान् प्रभोज्य सा ॥
षोडशस्य शतस्यास्मिन् सप्ताशीतितमेऽब्दके। प्रतिमानां प्रतिष्ठाऽभूदेवं श्रीमेदिनीतटे ॥७२॥

एवं श्रीविजयादिदेवसुगुरुः स्वर्णाचलाख्ये पुरे,
श्रीमन्मेदतटे पुरे च स लसद्बिम्बप्रतिष्ठे व्यधात्।
श्रीश्रीवल्लभपाठकः समपठत् यस्य प्रशस्यानिमान्,
सत्कर्तव्यचयान् विचक्षणगणैः संवर्णनीयान् सदा ॥७३॥

इतिश्री श्रीबृहत्खरतरगच्छीय श्रीजिनराजसूरिसन्तानीय पाठकश्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराज पातशाह श्रीअकब्बरप्रदत्तजगद्गुरुबिरुदधारक श्रीहीरविजयसूरीश्वरपट्टालङ्कार पातिशाहिश्रीअकब्बरसभालब्धदुर्वादिजयवाद भट्टारक श्रीविजसेनसूरीश्वरपट्टपूर्वाचलसहस्रकरानुकारि पातिशाहि श्रीजिहांगीरप्रदत्त महातपाबिरुदधारि श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरिनिर्मित-श्रीजाबालपुर–श्रीमेदिनीतटपुरप्रतिमाप्रतिष्ठाप्रतिपादको नाम त्रयोदशमः सर्गः ॥१३॥

# चतुर्दशः सर्गः

अथ नागपुरात्सङ्घः समाह्वातुं समागमत् । संरक्षितुं चतुर्मासं सूरीन्द्रं मेडतापुरे ॥१॥
प्रणम्य बहुशः प्रोक्तस्तेन सूरिः स्वभक्तितः । अपृच्छन्मेडतासङ्घं संघो मामाह्वयत्ययम् ॥२॥
मेदिनीतटसंघोऽत्र संघं नागपुरीयकम् । प्राहेति साम्प्रतीनेऽब्दे चतुर्मासं वसिष्यति ॥३॥
महत्त्वमिदमानन्द्य प्रसह्य च प्रदेहि मे । संघो नागपुरस्येति श्रुत्वा तूष्णीं व्यधात्तदा ॥४॥
मेदिनीतटसद्द्रङ्गं चतुर्मासमुपावसत् । सूरिर्नागपुरीयोऽपि सङ्घः प्रास्थात् तदाज्ञया ॥५॥
अथार्जुनपुरीनाम पुरासीच्छ्रेयसी पुरी । घंघाणीत्यधुना नाम्ना प्रसिद्धास्ति पुरी वरा ॥६॥
तत्र सम्प्रतिराजा प्राक् जिनागारमकारयत् । पद्मप्रभजिनं तत्र स्वामित्वेन न्यवेशयत् ॥७॥
अनेकाः प्रतिमा रीरीमय्यः सर्वा मनोरमाः । श्वेतस्वर्णमयी पार्श्वप्रतिमैका प्रभावभाः ॥८॥
पद्मप्रभजिनाधीशपार्श्वासीना इमा व्यभुः । प्रभावोऽपि महानासीत्तस्य तासां च सर्वदा ॥९॥
कुतोऽपि कारणाद् द्रङ्गभङ्गात्तद्वासिनो जनाः । ताः सर्वाः प्रतिमा भूमौ न्यस्यन्नुपसरः पुराः ॥
अगच्छत्प्रचुरोऽनेहा अम्रियन्त जना अपि । तासां निक्षेपकाः सर्वे द्रङ्गं ग्रामोऽपि चाभवत् ॥
अखनन्नान्यदा लोकाः समीपे सरसो भुवम् । प्रतिमैका तदा खण्डा प्रादुरासीत्स्वभावतः ॥
अन्या अपि ततः सर्वाः प्रादुरासन् यथाधृतम् । अभवच्च तदा तासां सत्पूजा महिमापि च ॥
अहो अजीववस्तूनां रागद्वेषाद्यभावतः । कदा नार्चा कदाप्यर्चा पुनरर्चा कदापि यत् ॥१४॥
विघ्नस्तत्कर्म नो किंचिद्वक्तुं नो शक्नुमोऽपि च । संभावयामः कर्मैव किंचित्तत्रापि निश्चितम् ॥
अथासीत्प्रवणो धर्मे त्रिहुणः साहुलाकुले । तस्य पुत्रा अमी पञ्च जनीनाः पञ्च सज्जनाः ॥१६॥
तद्यथा—हंसस्तेजस्तथा राजा मद्दः श्रीमहिराजकः । तेषु भ्रातृद्वयं स्वर्गमायुषः क्षयतोऽव्रजत् ॥

---

१—मेडतापुरे इति—मेदिनीतटे पाठान्तरम् ।

२—तेनेति नागपुर सङ्घेन । अयमिति नागपुरसङ्घ ।

३—वसिष्यतीति—विधास्यति पाठान्तरम् ।

५—मेदिनीतटसद्द्रङ्गमित्यत्र उपाऽन्वध्याऽङ्वसः इति उपपूर्वस्य वसतेराधारत्वात् द्वितीयैकवचनं । चतुर्मासमित्यत्र कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । तदाज्ञयेति श्रीविजय-देवसूरेराज्ञया ।

६—वरेति जने पाठान्तरम् ।

८—प्रभावेण भासते दीप्यते इति क्विपि प्रभावभाः ।

१०—न्यस्यन् निचिक्षिपुः । उपसरः तटाकसमीपे ।

१७—हंसमहिराजभ्रातृद्वयम् ।

तेजो राजा च विद्येते एतौ तत्तनयाविह । साक्षात्तौ तादृशावेव रूपवन्तौ महीतले ॥१८॥
हंसस्य महतो भ्रातुः पुत्रः सम्प्रति वर्तते । नाम्ना श्रीजयवन्तोयमर्थतो जयवानपि ॥१९॥
मेदिनीतटसद्द्रङ्गे समाजग्मतुरन्यदा । बलुन्दाग्रामतः सूरिं वन्दितुं तौ सहोदरौ ॥२०॥
अभिवन्द्योपविष्टौ तौ सूरेरग्रे कृताञ्जली । जीर्णोद्धारे महापुण्यमिति सूरिरुपादिशत् ॥२१॥
जीर्णोद्धारविधाने तौ व्यदधातां मनस्तदा । श्रुतेरनन्तरं सत्यं यतः स्तोकभवौ ध्रुवम् ॥२२॥
अब्रूतां तौ गुरोरग्रे न कदापि बुधब्रुवौ । उद्धारयाव घंघाण्यां जीर्णं चैत्यं यदस्ति तत् ॥२३॥
इत्युक्त्वा श्रीगुरोरग्रे तच्चरणौ प्रणम्य च । तत उत्थाय चाब्रूतां संघस्य पुरतश्च तौ ॥२४॥
घंघाण्यां कारयावावां जीर्णोद्धारं हितप्रदम् । ददात्याज्ञां यदा सङ्घः प्रसद्योपरि चावयोः॥२५
श्रीसङ्घोऽपि तदाऽवादीत्तौ प्रति प्रतिभूरिव । कारय तं हितं श्रीमज्जीर्णोद्धारं युवां द्रुतम् ॥
ततस्तौ संघसंयुक्तौ श्रीजयमल्लमन्त्रिणम् । अब्रूतां कारयावावां जीर्णोद्धारं तवौजसा ॥२७॥
जयमल्लोऽवदन्मन्त्री चैत्यं कारय तं द्रुतम् । विलम्बेथां युवां नात्र कार्ये साहाय्यमस्ति मे ॥
ततस्तौ शिल्पिनो विद्वत्कल्पान् शिल्पिकलाविदाम् । समाकारयतां जीर्णोद्धारकार्योत्सुकौ भृशम्॥
आहूतानागतांस्तांश्च तौ न्यवेदयतामिति । जीर्णोद्धारं च घंघाणीग्रामे दिव्यं विधत्त भोः ॥
सुमुहूर्ते दिने कान्ते तेऽप्यकुर्वंस्तदुक्तितः । जीर्णोद्धारं जिनेन्द्राणां सुन्दरं जिनमन्दिरम् ॥३१
पद्मप्रभजिनाधीशं समस्तप्रतिमाधिपम् । प्रत्यष्ठापयतां चैत्ये कृत्वा तौ तत उत्सवम् ॥३२॥
कुण्डलीमण्डलीभिस्तौ प्रभोज्य श्रीमहाजनम् । महाजनकराम्भोजे प्रादातां रूपकाणि च ॥३३
यस्योपदेशतो भव्या जीर्णोद्धारान्महाद्भुतान् । अनेकानि च चैत्यानि सन्ति नव्यान्यकारयत् ॥
शत्रुञ्जयादितीर्थेषु द्रङ्गेषु विविधेष्वपि । कारयान्त्यास्तिकाः केऽपि केऽपि चाकारयन् पुरा ॥
कारयिष्यन्ति चान्येऽपि पुरस्तादप्यनेहसि । एवमेवावनीपीठे स सूरिर्जीवताच्चिरम् ॥३६॥
—त्रिभिर्विशेषकम् ।

एवं चिरं श्रीविजयादिदेवसूरीश्वरो राजतु गच्छराजः ।
श्रीवल्लभः पाठक एष हर्षाद् यस्यास्तवीद् धर्मविधापनानि ॥३७॥

इतिश्री श्रीबृहत्खरतरगच्छीय श्रीजिनराजसूरिसन्तानीय पाठकश्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराजपातशाह श्रीअकब्बरप्रदत्तजगद्गुरुविरुदधारक श्रीहीरविजयसूरीश्वर पट्टालङ्कारपातिशाहि श्रीअकब्बरसभासंलब्धदुर्वादिजयवाद भट्टारक श्री-विजयसेनसूरीश्वरपट्टपूर्वाचलसहस्रकरानुकारि पातिशाहि श्रीजिहांगीरप्रदत्त महातपाविरुदधारि श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरि-सदुपदेशसाहुलागोत्र साहतेजाराजाकारित श्रीघंघाणीग्रामजीर्णचैत्योद्धारवर्णनो नाम चतुर्दश सर्गः।

---

३१—तदुक्तित इति तदाज्ञया पाठान्तरम् ।
३२—ततः जीर्णचैत्योद्धारकरणानन्तरम् ।

# पञ्चदशः सर्गः



पूर्वमेव तपोऽकुर्वन्नर्हन्तोऽर्हत्त्वसिद्धये । तपस्यत्यधुनार्हत्त्वमासाद्यायं नवो जिनः ॥१॥
सूरयः साम्प्रतीना हि वर्तमाना जिना अपि । वर्धमानं विहायान्ये कर्तारो नेदृशं तपः ॥२॥
तपः स्तुमोऽत एवास्य कृतं कर्ता करोति च । दीयन्तेऽन्ये च कुर्वन्तो दीप्यतेऽसौ दिने दिने ॥
षोडशस्य शतस्यास्मादेकषष्टितमाब्दकात् । प्रथमं यत्तपः सूरिर्व्यधात्तत् स्तौमि सम्प्रति ॥
एकवर्षं पुराचाम्लषष्ठाष्टमतपो गुरुः पारणाविकृतित्यागं निर्विकृतिकमातनोत् ॥५॥
आचाम्लानि चतुर्मासं द्रव्यत्रययुतानि च । स्थानस्थभक्तपानानि व्यदधात्स तपोनिधिः ॥६॥
षष्ठाष्टमोपवासानां पारणायां तपोभिदि । गृह्णन् द्रव्याणि चत्वारि द्वितीयाब्द इदं तपः ॥ युग्मम् ।
द्रव्याणि त्रीणि चत्वारि गृह्णन्नेकाशनं तपः । आवर्षयुगलं सूरिरकरोच्च निरन्तरम् ॥८॥
वन्दनाभिग्रहे श्रीमद्विजयसेनसद्गुरोः । ज्ञात्वेति विरहे सूरेर्भुक्तिर्युक्ता न मे सदा ॥९॥
एकान्तरोपवासान् स व्यधाद्मासससप्तकम् । निर्विकृतिकमातन्वन् पारणादिवसे सदा ॥ युग्मम् ।
षष्ठमाचाम्लमेकाशं निर्विकृतिकं तथा । षड्द्रव्यसहितं स्थानभक्तपानसमन्वितम् ॥११॥
यावद्वर्षत्रयं सूरिरकरोत्तप ईदृशम् । यावत्प्रहरमेकं च कायोत्सर्गं सदा निशि ॥१२॥ युग्मम् ।
अभिग्रहे च यात्राया आ मासनवकं किल । षड् विकृतीर्निषिध्यंश्च कुर्वन् षष्ठाष्टमादिकम् ॥१३
निर्विकृतिकमाचाम्लमेकासनमनिन्दितम् । यावन्मासत्रयं सूरिः पारणावासरेऽकरोत् ॥१४॥
पञ्च द्रव्याणि संगृह्णन् एकां च विकृतिं ध्रुवम् । स्थानस्थभक्तपानं च तप एतादृगन्यदा ॥१५॥
—त्रिभिर्विशेषकम् ।
कस्मिंश्चिद्वत्सरे सूरिर्व्यधात्पंक्तित्रिकं तपः । उपवासैस्तथाचाम्लैर्निर्विकृतिकैः [च] पुनः ॥१६॥
एकाशनैश्च कृत्वैव द्रव्याणां परिमाणकम् । परित्यज्य रसान् षट् च रसनासुखकारिणः ॥ युग्मम् ।
कर्मक्षयविधानार्थमुपवासादिकं तपः । अस्तोकमकरोत्स्तोका भुञ्जानो विकृतीर्गुरुः ॥१८॥
कस्मिन्नब्दे गुरोरुक्त्या मासमध्ये तु कल्पते । एका विकृतिरन्या मे न कल्पन्ते कदापि च ॥१९
यथेच्छमुपवासादि करणीयं मया तपः । व्यपोहाय च पापानां सोऽभ्यगृह्णादिति द्वके ॥ युग्मम् ।
कस्मिंश्चिद्वत्सरे संघाग्रहान्मासद्वयं ध्रुवम् । सन्निर्विकृतिकं सूरिरगृह्णान्नाधिकं ततः ॥२१॥
आचाम्लान्युपवासांश्च निर्विकृतिका अपि । अकरोच्छेषमासेषु दशसु श्रेयसे गुरुः ॥२२॥
अष्टकर्मक्षयं कर्तुमुपवासादिकं तपः । कस्मिंश्चिद्वत्सरे सूरिरकरोद्दुश्चरं चिरम् ॥२३॥

---

२—कर्तारो नेदृशं तप इति—नाकुर्वन्नीदृशं तपः ।

३—दीङ्च क्षये दिवादिरात्मनेपदी ।

२०—स श्रीविजयदेवसूरिः इति द्वके अभ्यगृह्णात् अभिग्रहमकरोत् ।

तपांस्येतादृशान्येवमनेकान्यकरोद्गुरुः । तद्विधौ पुनरद्यापि तस्याद्यो दिवसोऽसति ॥२४॥
अद्य यावद्गणाधीशोऽभ्यतपद्दुस्तपं तपः । एतादृशोऽस्त्यभिप्रायश्चिरायास्य च तत्कृतौ ॥२५॥
जीर्णोद्धाराजरत्तीर्थाऽजरचैत्यादिकं भवेत् । तपो लाभोपमं तर्हि तद्वर्षेऽल्पं तपोऽस्तु चेत् ॥२६
कस्यचिन्महतो मन्त्रिजयमल्लादिकस्य हि । विज्ञप्तिकरणादेव नान्यथा तत्तपोऽल्पता॥ युग्मम् ।
क्रियात्युग्रतया साक्षादवतीर्णो धनो मुनिः । सन्दिहन्तीति यं वीक्ष्य कवयो यं कलौ किल ॥
आनन्दविमलसूरिर्द्वितीयोऽयमभूद्गणे । नैवमेषोऽधिकस्तस्मादित्यन्ये ब्रुवते बुधाः ॥२९॥
तदाह–क्रियोद्धारः कृतस्तेन नैतादृक्षं कृतं तपः । महातपा इति ख्यातं नाम्नं च बिरुदं भुवि ॥
इति हेतुत्रयाधिक्यं शोभतेऽस्मिन्नहर्निशम् । यदत्रान्यगुणाधिक्यमस्ति वक्तुं न तत्क्षमः ॥३१॥
—त्रिभिर्विशेषकम् ।

क्रियायास्तपसश्चास्य पारं वक्तुं कदापि हि । शक्नुवन्ति कवीन्द्रा नो बृहस्पतिसमा अपि ॥३२॥

इत्युत्तमं श्रीविजयादिदेवसूरिस्तपो दुस्तपमातनोत्तत् ।
श्रीवल्लभः पाठक एवमाख्यत् कर्तुं न शक्तोऽन्यजनो यदीदृक् ॥३३॥

इतिश्री श्रीबृहत्खरतरगच्छीय श्रीजिनराजसूरिसन्तानीयपाठक श्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराज पातशाह श्रीअकब्बरप्रदत्तजगद्गुरुबिरुदधारक श्रीहीरविजयसूरीश्वरपट्टालंकार पातिशाहि श्रीअकब्बरसभासंलब्धदुर्वादिजयवाद भट्टारक श्रीविजयसेन सूरीश्वरपट्टपूर्वाचलसहस्रकरानुकारि पातिशाहि श्रीजिहांगीरप्रदत्तमहातपाबिरुदधारि श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरिकृततपोवर्णनो नाम पञ्चदशः सर्गः ॥१५॥

---

२४–असगतिर्दीप्त्यादानेषु भ्वादिरुभयपदी ।

२५–अस्य श्रीविजयदेवसूरेः । तत्कृतौ तपोविधाने । एतादृशोऽभिप्रायोऽस्ति ।

२७–चेत्तपोलाभोपमं जीर्णोद्धाराऽजरत्तीर्थाऽजरचैत्यादिकं भवत्तेर्हि तद्वर्षे कस्यचिन्महतो मन्त्रिजयमल्लादिकस्य विज्ञप्तिकरणादेव अल्पं तपोस्तु । अन्यथा तत्तपोऽल्पता तस्य श्रीविजयदेवसूरेस्तपोऽल्पता तपसोऽल्पत्वं नान्यथा नान्येन प्रकारेणेत्यर्थः ।

## षोडशः सर्गः

अथास्ति पत्तनं नाम पत्तनं यत्र चाभवत् । विजयसिंहसूरीणामुपाध्यायपदं पुरा ॥१॥
विजयदेवसूरीन्द्रमावसन्तं सुखेन तत् । श्रीमदहम्मदावादसंघ आह्वातुमागमत् ॥२॥
आपृच्छ्य पात्तनं संघमागृह्याहूय चादरात् । श्रीमदहम्मदावादसंघः सूरियुतोऽचलत् ॥३॥
संघः सूरिं विधायातिमहाद्भुतमहोत्सवम् । श्रीमदहम्मदावादसदुपाश्रयमानयत् ॥४॥
श्रीमदहम्मदावादद्रङ्गं सूरिरुपावसत् । साधूचितहितातिथ्यैर्वरीयान् वर इवोत्सवैः ॥५॥
स्तम्भतीर्थादथागच्छदतुच्छश्रीसमुच्छ्रितः । संभूय संघ आह्वातुं प्रणन्तुं च गणेश्वरम् ॥६॥
मौक्तिकैः स्वर्णपुष्पैश्च संवर्ध्याञ्जलिभिः शुभैः । श्रीस्थंभतीर्थसङ्घस्तमभ्यवन्दत भक्तितः ॥७॥
श्रीमदहम्मदावादद्रङ्गश्रीस्थंभतीर्थयोः । सङ्घौ ब्रूत इति स्पष्टं मिथो न वितथं वचः ॥८॥
तद्यथा–आद्यः सङ्घ इति ब्रूते द्वितीयं सङ्घमागतम् । भट्टारको नवीनोऽयं चतुर्मासं निवत्स्यति ॥
अवश्यं स्थापयिष्यामि न च स्थास्यति चेत्स्वयम् । चतुर्मासमसौ सूरिः पत्तनाद्यत्पुराह्वयं नयम् ॥
द्वितीयः स्तंभतीर्थस्य संघो वक्तीति तं प्रति । भवान्मोक्ष्यति सन्तुष्य समेष्यति तदा गुरुः ॥
अत्र त्वमानयः सूरिं श्रीसंघ किल पत्तनात् । गृह्णाति प्राध्यैसद्वस्तु सङ्घः प्राघूर्णको हि ते ॥१२
श्रुत्वेति प्रथमः सङ्घः कृत्वा तूष्णीं स्थितस्तदा । प्रोक्तं द्वितीयसंघेन विनयेनोचितं वचः ॥१३॥
उभौ संघौ समागत्य प्रणत्य च तदेति तम् । अब्रूतां स्वस्वविज्ञप्तिं स्वस्वचेतोहितावहाम् ॥
आधुनिकं चतुर्मासमिहैव स्ववशा वस । विजयदेवसूरीन्द्र विजयदेवसौख्यभाक् ॥१५॥
इति साक्षीव सूरीन्द्रः संघौ प्रति तदावदत् । आसीनौ पुरतो भक्त्या सुवादिप्रतिवादिवत् ॥
इतीति किं तदाह–विजयसेनसूरीन्द्रपादुकावन्दनां विना ।
विकृतीर्नाहरामीति पुरा गृह्णामभिग्रहम् ॥१७॥
इत्युक्ते सूरिराजेन पुरस्तात्संघयोर्द्वयोः । पूर्वपक्षनिषेधोऽभूत् द्वितीयाङ्गीकृतिः स्वतः ॥१८॥
श्रीसंघोऽहम्मदावादद्रङ्गवासी महाशयः । प्रसद्य स्तम्भतीर्थस्य संघं प्रत्यब्रवीदिति ॥१९॥
अभिग्रहमिमं सूरिर्नाकरिष्यद्यदा पुरा । नामोक्ष्यं च तदा सूरिं श्रीसंघस्थंभतीर्थके ॥२०॥
स्वत एव हि सूरीन्द्रो विना विज्ञप्तिमावयोः । स्थंभतीर्थे चतुर्मासं पुण्यान्निरणयत्तराम् ॥२१॥
अचलच्चलनौ मुञ्चन् कौसेयादिसिगम्बुजे । सुदिने जिनवत्सूरिः संघयुक् स्थंभतीर्थकम् ॥२२॥

---

२–उपान्वध्याङ्वस इति आङ्पूर्वस्य वसतेराधारस्य । तत्रेत्यस्य स्थाने तदिति कर्म ।

१८–पूर्वपक्षनिषेधः श्रीमदहमदावादनगरचतुर्मासावस्थानलक्षणपक्षनिषेधः । द्वितीयाङ्गीकृतिरिति श्रीस्तम्भतीर्थचतुर्मासावस्थानलक्षणपक्षाङ्गीकारः । स्वतः आत्मतः ।

२२–कौसेयादिसिगम्बुजे कौसेयादिवस्त्रकमलेषु । कौसेयादिसिगम्बुज इत्यत्र जात्या-

प्रसाद्याहम्मदावादसंघमापृच्छ्य च ध्रुवम् । महान्तो हि न कस्यापि विषादं कुर्वते किल ॥२३
श्रीमतः स्तंभतीर्थस्य संघः सन्तुष्टमानसः । सूरिं वरमिवादाय स्थंभतीर्थमुपागमत् ॥२४॥
आहोपुरुषिकां बिभ्रद्थाहंपूर्विकां पुनः । अहमहमिकां कुर्वन् इति संघोऽवदन्मिथः ॥२५॥
इतीति किं तदाह–स्थंभतीर्थपुरावेशमहोत्सवमहो गुरोः ।
करिष्याम्येव मुख्योहं करिष्यति भवान् कथम् ॥२६॥
अस्मिन्नवसरे संघमुख्यः ख्यातः क्षितेस्तले । शोभते जिनदासोऽसौ रत्नामीपालसोदरः ॥२७
पादजाहं स आगृह्य संघमाख्यदिति स्फुटम् । पूःप्रवेशोत्सवं श्रीमत्करवै भवदाज्ञया ॥२८॥
तदा संघः समस्तोऽपि प्रसद्येति तमादिशत् । परित्यज्य मिथश्चित्तादाहोपुरुषिकादिकम् ॥२९॥
इतीति किं तदाह–विजयदेवसूरीन्द्रपूःप्रवेशमहोत्सवम् ।
जिनदास विधेहि त्वं संघादेशोऽस्ति ते स्फुटम् ॥३०॥
पूःप्रवेशोत्सवस्याथ सामग्रीमग्रिमामिमाम् । श्रावको जिनदासोऽसौ व्यधाद्बहुविधां शुभाम् ॥
तद्यथा–पूर्णकुंभानिवाभीष्टसर्वसिद्धिप्रसाधकान् । व्यधापयच्च शुभाकारान् पूर्णकुंभान् स सत्वरम्॥
स्वर्णरूप्यमयान् नव्यान् दिव्यान् रत्नावलीयुतान् । अलङ्कृतानलङ्कारैः पूजितान् कुंकुमादिभिः ॥
उपर्युपरि कौशेयवासांसि दधतोऽद्भुतान् । स्फुर्जन्नेजान् स राजच्छ्रीराजमानानकारयत् ॥३४
दधती रुचिरं रूपमिन्द्राणीः काश्चिदङ्गनाः । धर्तुं मुर्द्धसु सत्पूर्णकुंभान् व्यरचयच्च सः ॥३५॥
मौक्तिकस्वर्णसंदृब्धप्रालम्बनकशोभितान् । अपहर्तुंनातपं श्रेष्ठी चन्द्रोदयानकारयत् ॥३६॥
मुक्ताभिः संस्कृतैः शस्तैः स्वस्तिकैः सहितान् शिवैः । पूर्णकुंभान्वितेन्द्राणी मूर्ध्नामुपरि रक्षितुम् ॥
जिनदासोऽथ लोकानां सर्वेषां सुखकाम्यया । रथानःशिविकादीनि यानान्यानाययद्द्रुतम् ॥
तद्यथा–अदूष्याद्दिव्यवैदुष्यात् पुष्यं पुष्यरथोच्चयम् । सच्छायं छत्रिकोपेतं कौशेयादिभिरावृतम्॥
उपवेशाय केषांचित् शकटान् सौख्यदान सदा । बहुधा युयुधानानां सुपुंसां परमोत्सवे ॥४०॥

पेक्षया एकवचनं । सिक्शब्दो वस्त्रपर्यायः स्त्रीलिङ्गः । [illegible]न्तः । अंशुकं वस्त्रमम्बरं सिचयो वसनं चीराच्छादौ सिक्चेलवाससी इति [illegible] । अथवा मुखमल्लादिवारिजे इति पाठान्तरं । मुखमल्ला इति लोकभाषाप्रसिद्धो वस्त्रविशेषः । स आदिर्यस्य तत् मुखमल्लादि तदेव वारिजं कमलं तस्मिन् मुखमल्लादिवारिजे । अत्रापि जात्यपेक्षया एकवचनं । मुखेन मल्ला इव मल्ला मुखमल्लाः । अन्यशासिनः प्रतिवादिनः ते आदिर्येषां ते मुखमल्लादयः त एव वारिजं कमलं मौक्तिकगणो वा तस्मिन् ।

३४–नैर्नृभिरीज्यन्ते प्रेर्यन्ते इति नेजास्तान् । नो नरं च समाथेऽपीति विश्वशंभुः ।

३५–स जिनदासः । दधतीः इन्द्राणीः काश्चिदङ्गनाः । इत्यत्र चतुर्षु द्वितीयाबहुवचनम् ।

३९–पुष्यरथः मूर्धन्यांतस्थाद्यमध्यः । सक्रीडार्थः पुष्यरथ इति हैमः ।

विचित्रैश्चित्रिताश्चित्रैर्जननेत्रकृतोत्सवाः । आनाययत्स संघेशः शिबिकाः शिवकारिकाः॥४१॥
—त्रिभिर्विशेषकम् ।

एवं विधाय सामग्रीं पूःप्रवेशोत्सवोचिताम् । जिनदासो धृतोल्लासो महाजनान् समाह्वयत् ॥
वाजिनो हस्तिनोऽनेकान् अलङ्कारैरलङ्कृतान् । समास्तीर्णपरिस्तोमान् श्रीमानानाययत्ततः ॥४३
वाद्यान्यनेकजातीनि समानाय्य विशेषतः । छटाः सत्केसराम्बूनामकरोत्स महाजने ॥४४॥
प्रक्षेपं पटवासानां महाजनपटेष्वपि । अतिभक्तिमनाः स्वीयहस्ताभ्यां स व्यधात्तदा ॥४५॥
पूःप्रवेशोत्सवस्यैवं सामग्रीमग्रतोऽग्रिमाम् । कृत्वाभिमुखमानन्दादानेतुं सोऽव्रजद् गुरुम् ॥
गत्वा महाजनोपेतो जिनदासो हरिर्गुरुम् । अभिवन्द्य हृदानन्द्य स्वर्णपुष्पैरवर्धयत् ॥४७॥
इन्द्राण्योऽपि हृदा प्रीताः पूर्णकुम्भान्विताः स्त्रियः । अभ्यवन्दल्लँसन्मुक्ता पङ्क्त्या तं चाभ्यवर्धयन्॥
सह लात्वाग्रतः कृत्वा स सूरिं परमन्तरा । प्रावेशयच्च धर्माँको यशो देशान्तरं स्वकम् ॥४९॥
(—'कीर्तिं देशान्तरं स्वकाम्'—इति वा पाठः )

साध्वाचारात् प्रतिक्रम्य स ईर्यापथिकीं तदा । जिनेन्द्र इव सद्भद्रासनमध्यास तत्क्षणात् ॥५०
जिनदासः सुराधीश इवासत च तत्पुरः । श्रीसङ्घसहितो भक्त्या सुरप्रकरराजितः ॥५१॥
आसन्ताग्रत इन्द्राण्य इव देवीसमन्विताः । योषितो योषितां तत्या श्रियां तत्या च चञ्चुराः॥
धर्मोपदेशं श्रीसूरिः शुभाशिषमिवेदृशम् । उपादिशत्प्रसन्नात्मा ततः संघसमक्षकम् ॥५३॥
ईदृशं इति कीदृशं तदाह—जिनाः सिद्धास्तथाचार्या उपाध्यायाश्च साधवः ।
श्रियं च मङ्गलं कुर्युः पञ्चैते परमेष्ठिनः ॥५४॥

श्रुत्वेति जिनदासोऽथ समुत्थाय स्वपाणिना । श्रीमहाजनहस्तेषु न्यस्तवान् रूपकोत्करम् ॥५५॥
पूःप्रवेशोत्सवे सूरेरेवं श्रीजिनदासकः । त्रयोदशशतान्यत्र रूप्याण्यव्यययत्तराम् ॥५६॥
ततः संघेन संयुक्तः समहोत्सवपूर्वकम् । विजयसेनसूरीन्द्रपादकाब्जमवन्दत ॥५७॥
उपाध्यायपदं श्रीमद्रत्नचन्द्राय सोऽददात् । पण्डितपदमन्येभ्यः साधुभ्यश्च तदोत्सवात् ॥५८॥
विकृत्यभिग्रहं पूर्णमपूर्णमिव सोऽकरोत् । विकृतीनां समस्तानां न सदा भोजनाद् भृशम् ॥५९॥
जिनदासादिक-स्थम्भतीर्थसंघाग्रहाद्गुरुः । अध्यवसच्चतुर्मासं स्तम्भतीर्थपुरं सुखात् ॥६०॥
भव्यान् प्रावर्तयद् धर्मे सिद्धान्तोक्तचतुर्विधे । चतुर्दशानवद्याश्च विद्या अध्यापयन् मुनीन् ॥६१॥

---

४३—श्रीमान् जिनदासः ।

५६—व्यय वित्तसमुत्सर्गे चुरादिः परस्मैपदी । यद्यपि अव्यययत्तरामित्यनेन वित्तसमुत्सर्ग इत्यर्थो लब्धस्तत् कथं पुनरूप्याणीति ? सत्यं, करिकलभवदुक्तिरोषान्नदोषः । अथवा वित्त इत्यस्य सामान्यधनपर्यायत्वात् रूप्याणीति रूप्यशब्दस्सामान्येन सर्वनाणकपर्यायं ब्रुवन्नपि अत्र रूपइया इति भाषापर्यायं ब्रवीति, इत्यतो न पुनरुक्तिदोषः ।

इत्थं श्रीविजयादिदेवसुगुरुः श्रीस्थम्भतीर्थे पुरे
चातुर्मासकमद्भुतं समकरोत् सङ्घाग्रहादुत्सवैः ।
साम्राज्यं प्रतिपद्य सूरिपदजं जाग्रत्प्रतापोज्ज्वलम्
श्रीश्रीवल्लभपाठकप्रपठितं हर्षं प्रकर्षप्रदम् ॥६२॥

इतिश्री श्रीबृहत्खरतरगच्छीय श्रीजिनराजसूरिसन्तानीय पाठकश्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराजपातशाह श्रीअकब्बरप्रदत्तजगद्गुरुबिरुदधारक श्रीहीरविजयसूरीश्वर पट्टालङ्कारपातिशाहि श्रीअकब्बरसभासंलब्धदुर्वादिजयवाद भट्टारक श्रीविजयसेनसूरीश्वरपट्टपूर्वाचलसहस्रकरानुकारि पातिशाहि श्रीजिहांगीरप्रदत्त महातपाबिरुदधारि श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरि-श्रीस्थम्भतीर्थे-प्रथमचतुर्मासककरणवर्णनो नाम षोडशः सर्गः।

# सप्तदशः सर्गः

अथात्रावसरे श्रीमन्मण्डपं सर्वसम्पदाम्। पत्तनं मण्डपं नाम बाभात्युत्सवमण्डपम् ॥१॥
पातिसाहि-जहांगीर-सिलेमसाहिरुत्तमः। हिन्दू-तुरुष्कभूपालनायकस्तत्र शोभते ॥२॥
पातिसाहिसभासीना विद्वांसोऽन्ये जना अपि। दर्शनानां शुभां षण्णां धर्मवार्ता जगुर्मिथः॥३
तद्यथा–दर्शनेष्वेषु सर्वेषु जैनं दर्शनमुत्तमम्। दानं तपः क्रियाक्रूरा शीलं श्रेयश्च यत्र यत् ॥४॥
तत्रापि साम्प्रतं भाति विजयदेवसद्गुरुः। कुर्वन्नुग्रं तपश्चोग्रां क्रियावत्पुङ्गवः क्रियाम् ॥५॥
उग्रत्वं तपसः श्रुत्वा क्रियायाश्च यतिव्रजे। पातिसाहिर्जहांगीरोऽन्यदेति प्रत्यपादयत् ॥६॥
इतीति किं तदाह–भो चन्दूः संघप ! क्वासि धर्माचार्यस्तवाधुना।
विजयदेवसूरीन्द्रो नाऽमिलत्स कथं च नः ॥७॥
तदा चन्दूरिति प्राह पातिसाहिं कृताञ्जलिः। अस्ति सम्प्रति सूरीन्द्रः स्थम्भतीर्थे गुरुर्मम ॥८॥
पातिसाहिरिति श्रुत्वा प्राह चन्दूं प्रतीति च। विजयदेवसूरीन्द्रं समाहूय ममाज्ञया ॥९॥
फुरमाणं तदालेख्य सूरेराह्वानसूचकम्। चन्दूसंघपतेर्हस्ते पातिसाहिरदान्मुदा ॥१०॥
अवदद्वदनाच्चेत्थं मदीयमहर्दीं वरम्। मुञ्च सूरीश्वराह्वानहेतवे मुखहेतवे ॥११॥ युग्मम् ॥
ततश्चन्दूः समाहूय तदा सदहर्दीं द्रुतम्। स्फुरन्मानं स्वहस्तेन तद्धस्ते च समार्पयत् ॥१२॥
अचालीदहर्दीः शीघ्रं ततः सन्तुष्टमानसः। स्थम्भतीर्थपुरं प्राप्नोत् समाप्नोत् स्वेहितानि च ॥
प्रणम्य शिरसा सूरिं स्फुरन्मानं समार्पयत्। वाचं वाचं गुरुः सङ्घः श्रावं श्रावं त्वमोदत ॥१४॥
प्रीतिदानं तदा प्रादाज्जीवितार्हमनेकधा। संघः श्रीस्थम्भतीर्थस्य तुष्टः किं किं ददाति न ॥१५
विहारो नोचितः साधोश्चतुर्मासे कदापि हि। तथापि कारणे कार्य उक्तिरस्त्यार्हतीति च ॥
( –जैनीत्युक्तिश्च वर्तते–इति वा पाठः ) ॥१६॥
शास्त्रार्थमवधार्यैति निवेद्य च महाजनान्। महालाभं च विज्ञाय श्रीसूरिरचलत्ततः ॥१७॥
अर्जयन्नध्वनि श्रेयः प्रापयंश्चापरान् जनान्। व्यापारीव सुवस्त्वोघलाभं ग्रामादिकं प्रति ॥१८॥
मण्डपं नगरं सूरिः प्राप्नोद्दिव्यमहोत्सवैः। आश्विनस्यावदातस्य दिवसे हि त्रयोदशे ॥१९॥
ततश्चन्दूः प्रसन्नात्मा पातिसाहिं न्यवेदयत्। आगतो भवदाहूतो विजयदेवसूरिराट् ॥२०॥

---

१४–तुरत्र पुनरर्थे। तेन गुरुः श्रीविजयदेवसूरिः वाचं वाचममोदत। तु पुनः सङ्घः श्रीस्तम्भतीर्थश्रावकगणः श्रावं श्रावं श्रुत्वा श्रुत्वा अमोदत। वाचं वाचं श्रावं श्रावमित्युभयत्र आभीक्ष्णे णमुल् चेति णमुल्, नित्यवीप्सायां द्विरुक्तिश्च।

१७–ततः श्रीस्तम्भतीर्थात्।

पातिसाहिरिति श्रुत्वा स्वमतुष्यत्स्वचेतसि। अस्ति स्वस्ति गुरोः कार्यं प्राक्षीदिति च तं प्रति॥
चन्दूश्चन्दसमं सौम्यात् इहाहूय तमानय। पादौ गोष्ठीं च धर्मस्य नमानि न विदधानि च॥२२
आश्विनस्यावदातस्य चतुर्दशदिने शुभे। मध्याह्ने तसबीखानास्थाने सूरिवरोऽव्रजत् ॥२३॥
पातिसाहिस्तदोत्थायाभ्यागत्य च पदत्रयम्। अभ्यवन्दत पादाब्जं श्रीसूरेः पुण्ययोगतः॥२४॥
तपस्तेजस्विनं सूरिं द्रष्ट्वेति व्यस्मयत्तराम्। अहो धन्योऽयमीदृक्षः साक्षादेष तपस्तनुः॥२५॥
कथमीदृक्षकायोऽयं ज्योतीरूपं दधत्सदा। कथमीदृग् तपः कृत्वा धर्ता पुष्टिं तनौ तनुः॥२६॥
स्वागतादिकसद्वार्तां समपृच्छत्पुनः पुनः। सद्बान्धव इव स्नेहात्पातिसाहिर्जगद्गुरुः॥२७॥
धर्मगोष्ठीं वरिष्ठात्मा गरिष्ठेन गुणैः सदा। श्रीसूरिणा सह श्रीमान् पातिसाहिर्व्यधाद् रहः॥
रात्र्याहारपरित्यागं साध्वाहारविधिं पुनः। अपृच्छच्चापरं साधु साध्वाचारं स सद्गुरुम्॥२९
रात्र्याहारपरित्यागविधानसुफलाफलम्। अवदच्छ्रीगुरुः सर्वमन्यदपि च तं प्रति॥३०॥
कृत्वैवं धर्मसद्गोष्ठीं पातिसाहिरमोदत। श्रेयानेतस्य धर्मोऽयमवादीदिति चाद्भुतम्॥३१॥
इतीति किं तदाह–तपाबिरुद इत्यस्ति भवतां प्राकृतनस्सदा।

सदातस्त्वं मदुक्तोऽसि जहांगीरमहातपाः॥३२॥

विजयदेवसूरीन्द्रमन्वन्ये सूरयो भुवि। तपस्विनोऽपि विद्वांसः क्रियावन्तश्च सर्वदा॥३३॥ युग्मम्॥
उत्सूत्रभाषिणो ये च तदीयाः प्रतिवादिनः। पातिशाहिः समस्तांस्तान् सर्वथा हि निराकरोत्॥
महातपा इति ख्यातः शब्दः सिद्ध उणादिषु। सार्थकस्त्वद्य विख्यातस्त्वय्येवान्यत्र नैव च॥३५॥
पातिसाहिरिति प्रेम्णा निवेद्य बिरुदं मुखात्। चन्दूसंघपतिं प्राह कुर्वित्यस्य महोत्सवम्॥
तद्यथा–सन्ति सर्वाणि वाद्यानि गृहीत्वा तानि मेऽधुना।

वादयन् स्थानतोऽस्मात्तं नायय त्वमुपाश्रयम्॥३७॥

निवेद्य करवाणीति सद्यश्चन्दूरुदारधीः। पातिसाहिं प्रसादार्द्रलोचनं लोचनोत्सवम्॥३८॥
पातिसाहेः समस्तानिसंगृह्यातोद्य सञ्चयम्। महाजनान् समाकार्य वर्योत्सवपुरस्सरम्॥३९॥
पुरस्तात्सद्गवाक्षस्य पातिसाहेर्दृढाग्रहात्। सम्भूयानेकसल्लोकविलोकितमुखाम्बुजम्॥४०॥
विजयदेवसूरीन्द्रमण्डपोपाश्रयं मुदा। आनयन्नयतो नित्यं जितविद्वेषिदुर्जनम्॥४१॥

–चतुर्भिः कलापकम्।

---

२१–तं प्रति श्रीचन्दुं प्रति। २२–रेफहीनश्चन्दशब्दश्चन्द्रपर्यायः उज्वलदत्तौणादौ।

३०–रात्र्याहारपरित्यागस्य सुफलं शोभनं लाभं स्वर्गादि, रात्र्याहारविधानस्य अफलं फलविरोधिनं लाभं पापं नरकगत्यादि। न फलं अफलं विरोधेऽत्र नञ्।

३३–अन्ये सूरयो भुवि विजयदेवसूरीन्द्रमनु हीना इत्यर्थः। एवं तपस्विनोऽपि हीनाः, विद्वांसो हीनाः, क्रियावन्तश्च हीनाः। हीने इति हीने द्योत्ये अनु इत्यस्य कर्मप्रवचनीयसञ्ज्ञत्वात् विजयदेवसूरीन्द्रमिति द्वितीया।

पातिसाहि-जहांगीर-महातपा अयं गुरुः । विजयदेवसूरीन्द्र इति ख्यातोऽभवद्भुवि ॥४२॥
श्रीजिनशासनस्यास्य तपागच्छस्य चाद्भुतः । अभवन् महिमा ज्यायान् श्रीपूज्यस्यापि च ध्रुवः॥
पातिसाहिरथापृच्छत् श्रीचन्दुं संघनायकम् । तस्मिन् रात्रिंदिवे चैवं गोसलखानसंस्थितः ॥
एवमिति किं तदाह–भो चन्दूस्त्वमथातुष्य उत नो वेति मां वद ।

अतुष्यमिति सोऽवादीत् पातिसाहिं प्रति स्फुटम् ॥४५॥

पातिसाहे चिरं जीव धुर्यं न्यायवतां सदा । रामराज इव न्यायं त्वं व्यधा विबुधाग्रणीः ॥४६॥
अहं कथमतुष्यं नो समतुष्यं विशेषतः । धर्मन्यायविधानाद्यत् सर्वस्तुष्यति सज्जनः॥४७॥ युग्मम्।
पातिसाहिरिति प्राह लोकभूपसमक्षकम् । सर्वेषां गुरुरेषोऽस्तु सर्वस्वामी च सर्वदा ॥४८॥
समस्तपूर्वसूरीन्द्रपरम्पराक्रमाश्रितः । यथाहं पातिसाहीनां क्रमायातस्तथा ह्यसौ ॥४९॥
वर्तते दीप्यते चोर्व्यां सर्वसूरिशिरोमणिः । हिन्दू-तुरुष्कभूपालमौलिचूडामणिः सदा ॥५०॥
अतः समस्ता भो लोका मन्यन्तामिममुत्तमम् । समस्तारिं समस्तानां मामिव प्रभुतोन्नतम् ॥
पातिसाहिरभाषिष्ट वारं वारमिति स्फुटम् । मत्तोऽप्यधिकतेजस्वी यद्वर्त्ते वशवर्त्यहम् ॥५२॥
कुपितः कोऽपि पापीयान् कोपतः कोपपूरितः । भविष्यति सदा दुःखी स एतस्मात्पराङ्मुखः ॥
धन्योऽयं कृतपुण्योऽयं तपस्तेजःसमुच्चयः । दर्शनेषूत्तमं चास्य दर्शनं सुखकारि यत् ॥५४॥
एवं प्राशंसतानेकभूपलोकसभास्थितः । पातिसाहि-जहांगीर-शिलेमसाहिरहो गुरुम् ॥

इत्थं प्राप महातपाबिरुदकं श्रीपातिसाहेर्मुखाद्<br>
यः श्रीमद्विजयादिदेवसुगुरुः सोऽयं सदा दीप्यताम् ।<br>
श्रीश्रीवल्लभपाठकेन कविना व्यावर्णितं सर्वतः<br>
श्रोतृश्रोत्रसुखप्रदं सुविशदं सत्योक्तितः सर्वदा ॥५६॥

इतिश्री श्रीबृहत्खरतरगच्छीय श्रीजिनराजसूरिसन्तानीय पाठकश्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराज पातिशाहि श्रीअकब्बरप्रदत्तजगद्गुरुबिरुदधारक श्रीहीरविजयसूरीश्वरपट्टालङ्कार पातिशाहिश्रीअकब्बरसभालब्धदुर्वादिजयवाद भट्टारक श्रीविजसेनसूरीश्वरपट्टपूर्वाचलसहस्रकरानुकारि पातिशाहि श्रीजिहांगीरप्रदत्त महातपाबिरुदधारि श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरिलब्धजहांगीरमहातपाबिरुदवर्णनो नाम सप्तदशः सर्गः ॥१७॥

---

४८–सर्वेषां एतद्गच्छीयसाधुश्रावकलोकानां सर्वस्वामी साधुसाध्वीश्रावकश्राविकाजिनप्रासादोपाश्रयादिस्वामी सर्वदा एव विजयदेवसूरिरस्तु ।

# अष्टादशः सर्गः

अथ यस्य सदानन्दात् कुर्वन्त्यादरतः सदा। स्वर्णरूप्यादिभिः पूजां नवाङ्गानां वराङ्गिनः ॥१
प्रतिग्रामं प्रतिद्रङ्गं धर्मरङ्गेण धर्मिणः। नीलीरागा गुणग्रामान् गायन्तो गुणरञ्जिताः॥२॥ युग्मम्।
यदीयवचसा भव्याः कारयन्ति दिने दिने। बिम्बानि विविधान्यत्र स्वर्णरूप्यमयानि च ॥३॥
प्रासादान् विविधान् नव्यान् जीर्णोद्धारांश्च सुन्दरान्। यदीयवचसा श्राद्धाः कारयन्ति दिने दिने॥
तद्वर्षे नास्ति यस्मिन्न प्रतिष्ठा स्यात्कदाचन। करोति चाकरोत्कर्ता प्रतिष्ठां च स सद्गुरुः॥५॥
याः प्रतिष्ठाः कृताः पूर्वं द्रङ्गशत्रुञ्जयादिषु। नालभे सर्वथा तासां संख्यां यावदियत् क्षणम् ॥६॥
शत्रुञ्जयादितीर्थानां यात्रां कर्तुं यदुक्तितः। सङ्घान् कुर्वन्त्यकुर्वंश्च कर्तारश्चोत्सवाज्जनाः ॥७॥
साधवः श्रावकाश्चान्ये सद्धर्मं साध्नुयुः सदा। उपाश्रयानिति श्रेयोबुद्ध्या श्राद्धाश्च कुर्वते ॥८॥
अकुर्वंश्च करिष्यन्ति यद्वचः प्रेरिता भृशम्। व्ययित्वा प्रचुरं द्रव्यं सत्सुधर्मसभा इव ॥९॥
सत्साधर्मिकवात्सल्यं श्रावका भावभासुराः। सर्वे कुर्वन्ति सर्वत्र यत्पवित्रवचोधुताः ॥१०॥
व्याख्यानागमनादौ च यस्यानेहस्यहर्निशम्। प्रभावनां प्रकुर्वन्ति रूप्याद्यैः श्रावका मुदा॥११॥
प्रक्षिप्य मोदकाद्येषु छन्नं रूप्यादिकं धनम्। ददति श्रावकादिभ्यः श्रावका यद्वृषश्रुतेः॥१२॥
श्रीमत्पर्युषणापर्वदिवसेषु नवस्वपि। व्याख्यानेषु च कुर्वन्ति यन्नवाङ्गार्चनं जनाः ॥१३॥
चौरादिबन्दिलोकानां छोटनं कुर्वते नृपाः। विना स्वं वचसा यस्य श्रावकान्यजनस्य च ॥१४॥
अन्यद्रव्यसुवस्त्रादिगुप्तदानं सदा जनाः। ददति श्रावकादिभ्यो यस्य शस्योपदेशतः ॥१५॥
जन्तुमात्रदयां लोकास्तुरुष्का दुष्टचेतसः। पालयन्ति यदीयेन वचसा शुद्धचेतसा ॥१६॥
कथनीयं किमन्येषां हिन्दूभूमिभुजां खलु। सदा धरित्र्यां सर्वत्र जन्तुमात्रसुखप्रदाम् ॥१७॥

---

३–चकारात् पित्तलस्फाटिकपाषाणादिमयानि।

६–क्षणशब्दः कालविशेषस्य पर्यायोऽपि सामान्यविशेषयोरभेदोपचाराद् अत्र काल-पर्यायो व्याख्येयः। अथवा क्षणः अवसरः। यदनेकार्थः–क्षणः कालविशेषे स्यात्, पर्वण्यवसरे महे इति। इयांश्चासौ क्षणश्च इयत्क्षणस्तं इयत्क्षणं यावत् षोडशशतैकोननवतितमवर्षं यावद् इत्यर्थः।

७–जनाः श्रावकलोका इत्यर्थः।

९–कथंभूतान् उपाश्रयान्। सत्सुधर्मसभा इव सत्सुधर्मशाला इव इत्यर्थः। अशाला चेति सभाशब्दस्य अत्र शालार्थत्वात्तत्पुरुषेन क्लीबलिङ्गता। लिङ्गभेदं तु मेनिरे इति वचनात् भिन्न-लिङ्गोपमापि न दोषाय।

१४–श्रावकाश्च अन्यजनाश्च श्रावकान्यजनामिति समाहारो द्वन्द्वस्तस्य।

तपः सूरिर्जगच्चन्द्रो वर्षाणि द्वादशाकरोत् । तत्तपोऽवधिवर्षाणि लुप्त्वा यस्तमुतोऽजयत् ॥१८॥
तपसां संविधानेन मर्यादावर्जितेन हि । न कृतेन पुरा कैश्चिन्महद्भिः पूर्वसूरिभिः ॥१९॥
तपसा क्रियया चोग्रं प्रत्यक्ष्यं वीक्ष्य सद्गुरुम् । विस्मरन्ति धनागारं श्रुतं दृष्टं न कर्हिचित् ॥
करोत्याशातनामस्य यः पुमान् कोऽपि पापधीः । लभते स कलावेव सकलाङ्गेषु वेदनाम् ॥२१॥
सेवन्ते ये नरा नित्यं सत्येनैव च चेतसा । साम्राज्यादि लभन्ते ते यं गुरुं सुरसन्निभम् ॥२२॥
यादृशोऽतिशयोऽस्यास्ति नान्येषां तादृशः कलौ । सेवाविधायिनां पुंसां सौख्यदो दुःखनाशकः॥
पराङ्मुखानां लोकानां पराङ्मुखसुखप्रदः । दुर्मुखानां सदा मातृमुखानामिव दुःखदः ॥२४॥
यस्य प्रभावतो बद्धमुखा वाक्पतयोऽद्भुताः । ये च मातृमुखास्ते च समुखाः स्युः सुसेवकाः ॥२५
दरिद्रा अदरिद्रेन्द्रा रोगिणोऽरोगिणोऽपि च । धनिनो धनिनामीशा नीरोगा भोगभोजिनः ॥
यस्यास्यैकावतारित्वं लघुकर्मत्वतः किल । सम्भावयन्ति सर्वेऽपि कवयो भविका अपि ॥२७॥
एष देवभवादेवावतीर्णं इति निर्णयात् । दृढसंहननाङ्गत्वात्तप ईदृग् करोति यत् ॥२८॥
नित्यं पद्मासनादीनि यः करोत्यासनानि च । चतुरः प्रहरान् यावद् ध्यानं ध्यायति च ध्रुवम् ॥

इत्थं लसच्छ्रीविजयादिदेवसूरीश्वरश्रीसुकृतोपदेशान् ।
शृण्वन्ति कुर्वन्ति च भव्यलोकाः श्रीवल्लभः पाठक इत्यपाठीत् ॥३०॥

इतिश्री श्रीबृहत्खरतरगच्छीय श्रीजिनराजसूरिसन्तानीयपाठक श्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराज पातिशाहि श्रीअकब्बरप्रदत्तजगद्गुरुबिरुदधारक श्रीहीरविजयसूरीश्वरपट्टालंकार पातिशाहि श्रीअकब्बरसभासंलब्धदुर्वादिजयवाद भट्टारक श्रीविजयसेन सूरीश्वरपट्टपूर्वाचलसहस्रकरानुकारि पातिशाहि श्रीजिहांगीरप्रदत्तमहातपाबिरुदधारि श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरिधर्मोपदेशश्रवणाङ्गीकरणवर्णनो नाम अष्टादशः सर्गः ॥१८॥

---

२५-२६—ये सुसेवका अबद्धमुखाः दुर्मुखाः लबाड इति भाषाप्रसिद्धास्ते यस्य श्रीविजयदेवसूरेः प्रभावतो अद्भुताः वाक्पतयः प्रधानवक्तारः स्युः। दुर्मुखे मुखराबद्धमुखौ इति । वागीशो वाक्पतौ इत्युभयं हैमकोषः। चः पुनः। ये सुसेवकाः मातृमुखा मूर्खाः ते च समुखाः वाचोयुक्तिपटवः स्युः। अथ बालिशः मूढो मन्दो यथाजातो बालो मातृमुखो जडः इति। वाग्मी वाचो युक्तिपटुः प्रवाक् संमुखो वावदूकः—इत्युभयं हैमकोषः। समुखदन्त्याद्यस्वरादिरेव। ये इति पदं, ते इति पदं, सुसेवका इति च पदं अग्रिमेऽपि श्लोके योज्यम्। यथा ये सुसेवकाः दरिद्राः ते यस्य प्रभावत अदरिद्रेन्द्राः धनिनः स्युः। ये सुसेवकाः रोगिणस्ते यस्य प्रभावतो अरोगिणो नीरोगाः स्युः। ये सुसेवकाः धनिनस्ते यस्य प्रभावतो धनिनामीशाः धनश्वराः स्युः। ये सुसेवका नीरोगास्ते च यस्य प्रभावतः भोगभोजिनः स्युः। भोगान् भुञ्जन्तीत्येवं शीलाः भोगभोजिनः। युग्म-व्याख्यानम्।

# एकोनविंशः सर्गः

अथ श्रीकल्पशाखीव शाखाभिरभिशाखिकाः। संतुष्टोऽयं समृध्नोतु विद्यमानाभिरन्वहम् ॥
(-शाखनाज्जगतीं जाग्रज्जगज्जगदधीश्वरः-इति वा पाठः)
सर्वान् विजयते शत्रून् अस्त्यस्याविजयोऽथवा। विजया प्रथमा शाखा ज्यायां विजयते सदा॥
सुन्दरा सद्गुणैः सर्वैस्तपःप्रभृतिभिर्भृशम्। शोणादिगणपाठात् स्यात् सुन्दरीत्यपि ङीपि च॥
निरतीचारचारित्रतपोविद्यादिभिर्गुणैः। वल्लभा निर्मला चैव हंसा हंस इवोदिता॥४॥
मलते सर्वशास्त्राणां परमार्थं विशेषतः। जगत्यां च यशः शस्यमित्युक्ता विमला बुधैः॥५॥
चन्द्रवत्सर्वलोकानां चन्द्रोक्ताह्लादनात्वतः। सदा कुशलसंयोगात् कुशला कुशलप्रदा॥
यस्यामुत्पन्नसाधुभ्योऽर्हद्धर्मो रोचते सदा। सच्छास्त्राध्ययनं चाग्रं रुचिस्तेनोच्यते बुधैः॥७॥

सद्विद्यालक्षणां लक्ष्मीं गृणातीत्यचि सागरा।
सौभाग्यं सर्वदास्त्यस्यां सौभाग्येति बुधैः स्मृता॥ ८॥

सर्वेषां हर्षहेतुत्वात् हर्षोऽस्त्यस्यां च शाश्वतम्। अस्त्यर्थप्रत्ययाकारयोगाद् हर्षा निगद्यते॥
कलाभिः सहिता नित्यं सकलेत्युच्यते बुधैः। सर्वदोदयसम्बन्धादुदयेत्युच्यते जनैः॥१०॥
आनन्दति सदानन्दैः सर्वविद्याविनोदतः। आनन्देति समाख्याता सारासारप्रभावतः॥११॥

---

१—अयं श्रीविजयदेवसूरिः श्रीकल्पशाखी शाखाभिरन्वहं समृध्नोतु वर्धतामित्याशीर्वादः। कथंभूतः अयं ? शाखिकाः अभिशाखाः, अभिलक्षीकृत्य संतुष्टः, अभिरभागे इति लक्षणेऽर्थे अभीत्यव्ययस्य योगे शाखिका इत्यत्र द्वितीयाबहुवचनम्, अव्ययीभावसमासाभावात्। अव्ययीभावसमासे तु लक्षणेनाभि प्रती आभिमुख्ये इति अव्ययीभावे, अव्ययीभावश्चेति अव्ययीभावस्य नपुंसकत्वे, नपुंसकत्वाद् ह्रस्वत्वे अभिशाखिकमिति स्यात्। शाखाः अभि लक्षीकृत्येत्यर्थः। शाखा एव शाखिकाः। सर्वशब्देभ्यः स्वार्थे कन्निति कनि, केण इति ह्रस्वे, प्रत्ययस्थात्कात्पूर्वस्यातः इदाप्यसुप इति अकारस्य इकारः। एवं कल्पशाखि विशेषणमपि व्याख्येयम्। शाखताज्जगतीं जाग्रज्जगज्जगदधीश्वरः—इति पाठे जगदधीश्वरः श्रीविजयदेवसूरिः शाखाभिः जगल्लोकं शाखतात् व्याप्नोतु। कः कां इव श्रीकल्पशाखीव, कां जगतीं, यथा कल्पशाखी जगतीं व्याप्नोति तथा श्रीविजयदेवसूरिरपि।

२—सर्वान् शत्रून् अन्तरस्थान् कामक्रोधलोभमोहमदहर्षान्। अथवा अस्याः शाखायाः ज्यायां पृथिव्यां विजयोऽस्तीति प्रथमा विजया शाखा।

३—सुन्दरा सुन्दरीति अस्त्यर्थप्रत्ययाऽकारयोगात् सुन्दरा, शोणादिगणपाठात् ङीपि सुन्दरी।

९—अस्त्यर्थे प्रत्ययः अस्त्यर्थप्रत्ययः स चासौ अकारश्चेति अस्त्यर्थप्रत्ययाकारस्तस्य योगः सम्बन्धस्तस्मात्।

१०—कलाश्चातुर्यादयस्ताभिः।

इत्यादिका महीयस्यः शाखाः शाखन्ति सर्वदा । यत्तपागच्छगच्छस्य विख्याता जगतीतले ॥१२
श्रीपण्डितपदाद्यम्बुधाराद्दन्दैरिमा गुरो । श्रीतपाकल्पसद्वृक्षमूलं सिञ्चंस्त्वमेधय ॥१३॥
मालाकारानिव श्राद्धांस्तत्प्रपालनतत्परान् । सूरिमन्त्रप्रभावाशीर्वादैर्वर्धय सद्गुरो ॥१४॥
एधतां श्रीतपागच्छो दीप्यतां सवितेव च । तेजसा सूरिमन्त्रस्य त्वदीयस्य च सर्वदा ॥१५॥
महीयान् श्रीतपागच्छः सर्वगच्छेषु सर्वदा । सर्वदा सर्वदाता च पर्वतात्सर्ववाञ्छितम् ॥१६॥
राजान इव विद्यन्ते श्रावका यत्र सर्वदा । नन्दताच्छ्रीतपागच्छः सततं सततक्षणः ॥१७॥
यत्र त्वमीदृशः सूरिर्वर्तसे गच्छनायकः । स्तूयसे चेति विद्वद्भिः पातिसाह्यादिभिर्नृपैः ॥१८॥
इतीति किं तदाह–
उल्लसन्ति भुवि व्योम्नि सूरयस्तारका इव । एकैकतो महीयांसो जाग्रज्ज्योतिष उद्गताः ॥१९॥
विच्छायीकृत्य तान् सर्वान् राजते सवितेव यः । विजयदेवसूरीन्द्रस्तपागच्छे स वर्तते ॥२०॥
भूरयः सूरयः सन्तो भूतलेऽभ्युदिता दिवि । यत्प्रतापरविध्वस्ता न प्रेक्ष्यन्ते ग्रहा इव ॥२१॥
यत्रायं दीप्यते सूरिः सूरयस्तत्र नापरे । यत्र सूर्यस्सदोदेति तत्र स्युस्तारकाः कथम् ॥२२॥
(' तत्र किं चन्द्रतारकाः ' इति वा पाठः ।)
त्वं सूरिर्वासरो यत्र न निट् तत्रान्यसूरयः । सदोद्योतः सदोद्बोधः पदार्थानां नवो नवः ॥२३॥
प्रातः सूरिर्यदा यत्र प्ररूपयति सद्वृषम् । प्रत्यक्षोऽयं महादेव इति प्राहुस्तदा जनाः ॥२४॥
व्याख्यातिरूपमुत्कर्षात् शास्त्रार्थान् सूरिशेखरः ।
व्याख्यान्तकि वरव्याख्यां व्याख्यातारोऽन्यसूरयः ॥२५॥
शास्त्रार्थांस्तन्मुखप्रोक्तान् ये शृण्वन्तितरां नराः । ब्रुवन्तिरूपमेवं ते ब्रुवन्तकि परे बुधाः ॥२६

१६–पर्व पूरणे भ्वादिः परस्मैपदी ।

२४–सूरिर्यदा यत्र प्रातः सद्वृषं प्रधानं पुण्यं दानादिचतुर्विधं प्ररूपयति कथयति तदा जनाः अयं प्रत्यक्षो महादेव इति प्राहुः कथयन्ति । महादेवो हि सद्वृषं प्रधानवृषभं प्रकृष्टरूपं करोतीत्यर्थः । तत्करोति तदाचष्टे इति चुरादित्वात् सुबंताण्णिच्; अथवा सद्वृषं विद्यमानवृषभं प्ररूपयति प्रकृष्टरूपं पश्यति । अत्र दर्शनार्थे णिच् ।

२५–सूरिशेखरः श्रीविजयदेवसूरिः सूरिशिरोवतंसः शास्त्रार्थान् व्याकरणसाहित्यालङ्कारच्छन्दस्तर्कप्रमुखानेकशास्त्रार्थान् उत्कर्षात् व्याख्यातिरूपं प्रशस्तं व्याकरोतीत्यर्थः । व्याख्यातारोऽन्यसूरयः वरव्याख्यां शास्त्राणां प्रधानव्याख्यानं व्याख्यान्तकि कुत्सितं व्याकुर्वन्तीत्यर्थः ।

२६–ये नरास्तन्मुखप्रोक्तान् श्रीविजयदेवसूरिमुखप्रलपितान् शास्त्रार्थान् शृण्वन्तितरां अतिशयेन शृण्वन्ति, ते नरा एवं ब्रुवन्तिरूपं प्रशस्तं कथयन्ति । एवमिति किं तदाह–परेऽन्ये बुधाः शास्त्रार्थान् ब्रुवन्तकि कुत्सितं कथयन्तीत्यर्थः ।

अतिशेषेतरां सूरीन् विद्यातेजोगुणादिभिः । राजन्तकि महान्तोऽपि सूरयोऽन्ये त्वदग्रतः ॥२७
गुणैरित्यादिभी रम्यैर्गुरुरत्नैरिवार्णवः । विजयदेवसूरीन्द्रः साक्षादर्हन्निवावति ॥२८॥
सत्यवादी सदावादी नोन्मादी न च दुर्मदी । न प्रमादी मृषावादी न वादे प्रतिवादिभिः ॥२९
प्रतिवादी जनोऽवादीद् यशोवादीति यद्यशः । स्याद्वादवादमानन्दी वावदीति स सद्गुरुः॥ ३०
यशोभग्योऽतिसौभाग्याज्जगज्जनयशस्विषु । वेशोभग्योऽसि सूरे त्वं निखिलेषु बलिष्वपि ॥३१
अयं सूरिर्जगत्त्राता पाता दुर्गतिपाततः । प्रमाता सत्पदार्थानां दाता चार्थान् मनीषितान् ॥३२
सूरिः सूरिरयं यत्र तत्र न पटु पटुपेटकम् । यत्र तिष्ठेद् हरिस्तत्र स्यात्किं करटिपेटकम् ॥३३॥
विरटत्यारटत्येव पटुकूटं कटूत्कटम् । दृष्ट्वामुं सद्गुरुं सिंहं कूटं करटिनामिव ॥३४॥
निराचकार निस्सारानगारांश्चिराय यः । उग्राचारक्रियाकारः सोऽभूदाचारतत्परः ॥३५॥
प्राप्नुयात् कः खगोऽनन्तं मेरुमुत्पाटयेच्च कः । कस्तरेत्तारकः सिन्धुं सूरे कः स्तौति ते गुणान् ॥
सहस्रद्वितयेनापि जिह्वानां नागनायकः । स्फुटान् स्फटान् सहस्रं च धरन् शिरसि सन्ततम् ॥
यदीयानि प्रशस्यानि विशदानि यशांसि हि । शेषो वक्तुं न शक्नोति को वराकोऽहमुत्सुकः॥

---

२७–भो श्रीविजयदेवसूरे ! त्वं विद्यातेजोगुणादिभिः सूरीन् अर्थात् पूर्वभट्टारकान् अतिशेषेतरां अतिशयेन अतिशयं प्रापयसि । अत एव त्वदग्रतो महान्तोऽप्यन्ये सूरयो राजन्तकि कुत्सितं शोभन्त इत्यर्थः । व्याख्यातिरूपं ब्रुवान्तिरूपामित्युभयत्र प्रशंसायां रूपप् इति तिङो-नुवृत्तोस्तिङन्तादपि रूपप्प्रत्ययः। शृण्वन्तितरां अतिशेषेतरामित्युभयत्र किमेतिङव्ययेऽतितरप्तम-पौ घ इति सूत्रेण घसंज्ञकस्य तरप् प्रत्ययस्य आमुः । व्याख्यान्ताकि ब्रुवान्ताकि राजन्ताकि इति त्रिषु सुबन्तस्य तिङोऽनुवृत्तः कुत्सितेऽर्थेऽकच् प्रत्ययः ।

३०–स सद्गुरुः श्रीविजयदेवसूरिः स्याद्वादवादं वावदीति आतिशयेन वदति । स कः ? यद्यशः प्रतिवादी जन इति अवादीत् अकथयत् । कथं० प्रतिवादीजनः यशोवादी । इतीति किं? किं भूतः सद्गुरुः सत्यवादी। पुनः कथं० सदावादी षड् दर्शनानां मध्ये मुख्यवादि-त्वात् । शेषं स्पष्टं । पुनः कथं ? प्रतिवादिभिरिह सहयोगं विनापि तृतीया, वृद्धो यूनेति निर्देशात् । ततोऽयमर्थः–प्रतिवादिभिः सह नैयायिकादिपञ्चदर्शनसम्बन्धिभिः सार्धं वादे न प्रमादी न प्रमादवान् न मृषावादी न कूटभाषकः ।

३१–यशः माहात्म्यं सत्त्वं श्रीः ज्ञानं प्रतापः कीर्तिश्चेति हैमोणादिः, श्रीकामप्रयत्नमा-हात्म्यवीर्ययशसां भगशब्दः । यशोभगोऽस्य विद्यते यशोभग्यः, वेश इति बलमुच्यते वेशो बलं भगो विद्यतेऽस्य वेशोभग्यः । अत्र उभयत्र वेशो यश आदेर्भगाद्यल् इति मत्वर्थे यल् प्रत्ययः लकारः स्वरार्थः ।

ईक्षमाणः सहस्राक्षः सहस्राक्षिभिरन्वहम् । चेन्न तृप्यति यद्वक्त्रं कथं तर्हि जगज्जनः ॥३९॥
अवतारस्त्वदीयोऽयं संसारापारपारदः । अवतार इव श्रेयान् श्रेयस्कारी च सद्गुरो ॥४०॥
अन्येषां सद्गुणान् सम्यक् पश्यतां त्वद्गुणाननु । विश्रामस्थानकं सूरे कवीनां वचसामसि॥
ईश्वरीकरणं सत्यं द्योतते त्वयि सम्प्रति । सर्वीय इव सर्वीयसर्वसर्वगुणाग्रणीः ॥४२॥
चिकीर्षसि रणं सूरे यद्यमा प्रतिवादिभिः । भजन्ते विकृतं तर्हि तमहो प्रतिवादिनः ॥४३॥
चपूर्वं प्रतिबुद्ध्य द्राक् तपूर्वं भववारिधेः । मपूर्वं तपसा सिद्ध्यै शपूर्वं ते सुखाप्तये ॥४४॥
त्वं रणं कुरुषे सूरे यदा क्षणमयः क्षणे । श्रुत्वा तं च तदा तं च दधते विविधं बुधाः ॥४५॥
कपूर्वं सर्वदायत्तं धपूर्वं संयमश्रियः । भपूर्वं तपसः शश्वत् वपूर्वं शिवयोषितः ॥४६॥ युग्मम्॥

---

४१—किं कुर्वतां कवीनां अन्येषां भट्टारकादीनां सद्गुणान् अनु त्वद्गुणान् अनुत्वद्गुणेभ्यो हीनान् पश्यतां, अन्यसूरीणां समीचीनान् वर्यशौर्योदार्यगाम्भीर्यादीन् गुणान् त्वद्गुणेभ्यो हीनान् पश्यन्तः कवयो न स्तुवन्तीति कविवचनानां त्वं विश्रामस्थानकं वर्तसे इत्यर्थः । त्वद्गुणान् अनु इत्यत्र हीने इति सूत्रेण हीनेऽर्थे अनुः कर्मप्रवचनीयः । कर्मप्रवचनीयत्वात् हीनार्थस्य अनोरव्ययस्य योगे त्वद्गुणान् इति द्वितीया, अनुना सह समासाभावात् पृथक् पदं च ।

४२—ईश्वरीकरणं अनीश्वरस्य पुरुषस्य ईश्वरस्य करणं सत्यं त्वयि संप्रति द्योतते । कस्मिन्निव सर्वीय इव तीर्थङ्कर इव इत्यर्थः । सर्वीय इत्यपि जिने इत्यभिधानकोषात् । सर्वीय इव सर्वेषु सर्वैर्गुणैरग्रणीर्मुख्यस्तत्सम्बोधनं सर्वीयसर्वसर्वगुणाग्रणीः ।

४४—हे सूर यदि प्रतिवादिभिरमा सह विकृतं विकारापन्नं प्रतिवादिप्रतिपादितप्रतीपोत्तरदानात् रणं संग्रामं वादलक्षणं चिकीर्षसि कर्तुमिच्छासि । तर्हि अहो इति आश्चर्ये प्रतिवादिनः तं रणं अविकृतं विकाररहितं भजन्ते सेवन्ते । कथंभूतं रणं चपूर्वं चरणं चारित्रं । किं कृत्वा ? प्राक् प्रतिबुद्ध्य । पुनः कथंभूतं रणं तपूर्वं तरणमित्यर्थः । केन ? तपसा । किमर्थं ? सिद्ध्यै । पुनः कथंभूतं ? शपूर्वं शरणमित्यर्थः । कस्य ? ते तव । किमर्थं ? सुखाप्तये सुखलब्धये ।

४६—व्याख्याः—हे सूरे त्वं यदा क्षणे व्याख्यानादि सम्बन्धिनि कालविशेषे रणं शब्दं कुरुषे तदा बुधाः पण्डिताः प्रतिवादिनः तं रणं श्रुत्वा, चः पुनः, तं रणं विविधं बहुप्रकारं दधते धरन्ति । कथंभूतः त्वं क्षणमयः उत्सवप्रधानः प्रचुरोत्सवो वा । कथंभूतं रणं ? कपूर्वं करणमिन्द्रियमित्यर्थः । जातावेकवचनं, पञ्चेन्द्रियाणि अथवा एकं जिह्वेन्द्रियमित्यर्थः । पुनः कथं० ? करणं सर्वदा सर्वकालं आयत्तं वशं निरुत्तरीकरणात् मौनं कुर्वन्तीत्यर्थः । पुनः कथं० रणं ? धपूर्वं धरणं संग्रहं । कस्याः संयमश्रियः । पुनः कथं० रणं ? भपूर्वं भरणं पोषणं । कस्य ? तपसः । शश्वत्सदा । पुनः कथं० रणं ? वपूर्वं वरणं । कस्याः ? शिवयोषितः ।

सुधास्यन्तो विधास्यन्त इव शश्वन्महाजनाः । पीयन्ते गोपयःश्रेयःश्रद्धया यद्वचःसुधाम् ॥
पयसस्यन्ति यस्यैते जना वृजिनवर्जिताः । वचः शुचि शुचिश्रेयोमयं ज्ञानमयं प्रियम् ॥४८
सर्वदा ये सुखस्यन्ति दुःखस्यन्ति कदापि न । ऋद्धिस्यन्ति बुधा ये च साम्राज्यस्यन्ति चावनौ ॥
स्तुवन्ति त्वां त एवैव श्रयन्ते च शुभाश्रयम् । त्वदीयं चरणाम्भोजं भट्टारकशिरोमणे ॥५०॥ युग्मम्
सूरयोऽन्ये महीयांसो गरीयांसो यशस्विनः । स्वस्थत्वं स्वस्वगच्छेषु यथा पुण्यं तु बिभ्रति ॥
बिभर्ति चक्रिवर्तित्वं तेषु यो जिनशासने । दिव्यं च दानशौण्डत्वमिति तं स्तौति को न विट् ॥
वर्यैश्वर्यसुशौण्डीर्यशौर्यदार्यादिभिर्गुणैः । सर्वेभ्योऽप्यधिकैः किन्तु धात्रैकत्र धृतैस्त्वयि ॥५३॥
—त्रिभिर्विशेषकम् ।

---

४७—व्याख्या:—महाजनाः शश्वत् यद्वचःसुधां श्रीविजयदेवसूरिवचनामृतं पीयन्ते पिबन्ति । पीङ् च पाने चतुर्थस्वरान्तो दिवादिरात्मनेपदी । कया गोपयःश्रेयःश्रद्धया—नीरोगनिर्मलसर्वदोषापहारिश्रेयस्कारिगव्यदुग्धसमानधर्मश्रद्धया । किं कुर्वन्तः ? सुधास्यन्तः आत्मनोऽमृतं वाञ्छन्तः । कथंभूता उत्प्रेक्ष्यन्ते—विधास्यन्त इव आत्मन ऋद्धिं वाञ्छन्त इव । यथा ऋद्धिलालसाः आत्मन ऋद्धिमिच्छन्ति तथा महाजनाः आत्मनः सुधामिच्छन्तीत्यर्थः । विधर्द्धिमूल्ययोरिति हैमानेकार्थः । सुधास्यन्तः विधास्यन्त इत्युभयत्र सर्वप्रातिपदिकानां क्यचि । लालसायां सुक् असुक् वागम इत्यपरे—इत्युक्तत्वाल्लालसायां क्यचि सुगागमे च शतृप्रत्ययः ।

४८—एते जना यस्य श्रीविजयदेवसूरेः शुचि पवित्रं वचः कर्मतापन्नं पयसस्यन्ति आत्मदुग्धमिच्छन्ति । अस्माकं श्रीविजयदेवसूरिप्ररूपितं वचनं दुग्धमित्यर्थः । शेषं स्पष्टं । पयसस्यन्त्यत्र सर्वप्रातिपदिकानां क्यचि, लालसायां असुगागमः ।

५०—हे भट्टारकशिरोमणे हे श्रीविजयदेवसूरे त्वां त एव एवं पूर्वोक्तप्रकारेण स्तुवन्ति । चः पुनः त एव त्वदीयं चरणांभोजं श्रयन्ते सेवन्ते, ये सर्वदा सुखस्यन्ति आत्मनः सुखमिच्छन्ति । कदापि न दुःखस्यन्ति आत्मनो दुःखं न वाञ्छन्ति । चः पुनः ये बुधाः ऋद्धिस्यन्ति आत्मनः ऋद्धिं वाञ्छन्तिः । चः पुनः येऽवनौ पृथिव्यां साम्राज्यस्यन्ति आत्मनः साम्राज्यं वाञ्छन्ति । सुखस्यन्ति दुःखस्यन्ति ऋद्धिस्यन्ति साम्राज्यस्यन्ति इत्येतेषु चतुर्ष्वपि सर्वप्रातिप्रदिकानां क्यचि, लालसायां सुगागमः ।

५३—विट् पुरुषः अथवा विद्, विद् ज्ञाने वेत्तीति विद् पण्डित इत्यर्थः । सुशौंडीर्यमिति अद्भुतसाहसिकत्वं । अत्र शाण्डीर्यशब्दः तालव्यचतुर्दशस्वरादिः । एकत्रेत्येकस्मिन् त्वयि धात्रा वेधसा धृतैरिति ।

अथ श्रीविजयाद्देवो देवसूरिरिव श्रिया। लोकैरनेकैरानन्दात् स्तूयमान इति स्फुटम् ॥५४॥
विजहार बहून देशान् प्रार्थ्यमानः पदे पदे। वसुदेव इवाभङ्गसौभाग्यान्नूतनोऽभ्यगात् ॥५५॥
प्रथमं सर्वदेशश्रीमण्डनेऽवन्तिमण्डले। तत्र मण्डपदुर्गादिदुर्गे दुर्गेश्वरोपमः ॥५६॥
सौराष्ट्रराष्ट्रसम्बन्धिश्रीमत्संघाग्रहग्रहात्। श्रीद्वीपबन्दिरादौ च श्रीनवानगरेऽपि च ॥५७॥
विचित्रगूर्जरत्रासु श्रीपत्तनपुरादिषु। कुर्वंश्चार्वीश्चतुर्मासीरसीममहिमामयीः ॥५८॥
इलादुर्गे जन्मभूमौ सावल्यां चान्तराऽन्तरा। सृजन्माहात्म्यतः श्रेष्ठां जेष्ठस्थितिचतुष्टयीम् ॥५९

---

५४—अथेति अधिकारान्तरे। श्रियोपलक्षितो विजयाद्विजयशब्दात् पुरतो देवशब्दो योज्यते तेन श्रीविजयदेवसूरिरित्यर्थः। किं० श्रिया मत्या गिरा वाग्चातुर्य्या वा देवसूरिर्बृहस्पतिरिव राजमान इति अध्याहार्य्यं। अत एवानेकैः लोकैः स्तूयमानः। कथमित्युक्तप्रकारेणेति।

५५—एवंविधः सन् किं कृतवानित्याह—बहून् घनान् देशान् गुरुर्विजहार पावितवान्। किं क्रियमाणः? पदे पदे प्रार्थ्यमान इति बह्वादरसूचकविशेषणं न तु स्वेच्छया अत एवाभङ्ग-सौभाग्यतः किं नूतनोऽपरो वसुदेवोऽयं अभ्यागात् प्राप्तवान्। यतोऽयं नाराणां नारीणां च वल्लभ इत्यभङ्गसौभाग्यात् नूतनत्वमसूचि। यतो वसुदेवस्य तु केवलं स्त्रीवल्लभत्वादिति। युग्मव्याख्या।

५६—अथ यान् देशान् विजहार तन्नामान्याह—दुर्गेश्वरो महादेवस्तदुपमस्तत्तुल्यो गुरुर्गच्छैश्वर्येणेति तात्पर्यम्। तथा अवन्तिमण्डले मालवदेशे। मालवाः स्युरवन्तय इति हैमनामकोशः। शेषं सुगमम्।

५७—सौराष्ट्रराष्ट्रसम्बन्धी सुराष्ट्रदेशीयो यः श्रीमान् सङ्घस्तस्याग्रहस्य हठस्य ग्रहात् ग्रहणात् श्रीद्वीपबन्दिरादौ, आदिशब्दात् उन्नतदुर्ग—श्रीगिरिनारयात्रादिपुण्यकृत्यं कुर्वन्। श्रीद्वीपबन्दिरे चतुर्मासकत्रयमन्तरान्तरा चक्रे। तत्र तन्माहात्म्यात्प्रथमज्येष्ठस्थितावेव फरंगीपातिशाहिनापि कदाप्यभूतपूर्वा व्याख्यानकरणाज्ञा दत्ता। सा त्वद्यापि सर्वेषां चमत्कृतिं कुर्वती प्रवर्तते चेति। शेषं नवीननगरगमनादिसुबोधम्।

५८—विचित्रा विविधग्रामनगरपुरादिसंकीर्णा या गूर्जरत्रास्तासु, गूर्जरदेशेषु इति यावत्; श्रीपत्तनादिनगरेषु। अत्र प्रथमं पत्तनग्रहणं प्रथमचतुर्मासकस्य तत्र विधानात्। आदि शब्दादन्येषु स्तंभतीर्थ-राजनगर-राजधन्यपुरादिषु चार्वीः रम्याः चतुर्मासीः। किं असीममहिमामयीः निस्सीममाहात्म्यप्रचुराः। अत्र प्राचुर्यार्थे मयट्प्रत्ययः। तथा च महिमाशब्दः आकारान्तोऽप्यस्तीति। शेषं कंठ्यं।

५९—ज्येष्ठस्थितयश्चतुर्मास्यः तासां चतुष्टयीं किं माहात्म्यतो गुरुप्रभावात् श्रेष्ठां सृजन् कुर्वन्। शेषं सुबोधम्।

आरासणेऽर्बुदाद्रौ च सीरोहीनगरादिषु । स्वर्णशैलीयदेशे च श्रीजाबालपुरादिषु ॥६०॥
मरुस्थल्यां मेडतादौ कोट्टे घंघाणिकापुरे । ओसवालोत्पत्तिभूमावोकेशनगरादिके ॥६१॥
सपादलक्षदेशे च श्रीमन्नागपुराङ्किते । इत्यादिद्रङ्गदेशेषु व्यहार्षीद् वृषवद्गुरुः ॥६२॥
—सप्तभिः कुलकम् ।

इतो मरुस्थलीमध्ये सदा स्वास्थ्यनिबन्धनम् । श्रीमत्सूरेरवस्थानमेवाकर्ण्य स्वकर्णयोः ॥६३॥
श्रीमेदपाटदेशेशश्रीकर्णनृपसूनुना । श्रीजगत्सिंहसंज्ञेन श्रीराणाकेन चिन्तितम् ॥६४॥ युग्मम्।
अहो मरुस्थले देशे यन्महिम्ना महीयसा । अष्टाब्दावधि यन्नष्टा दोषा दुर्भिक्षकादयः ॥६५॥
पश्यामि यदि तस्यास्यं सूरेः सुकृतशेवधेः । मरौ दुष्कालवन्मेदपाटे पापं प्रयाति नः ॥६६॥
ध्यात्वेति तेन धात्रीणां पत्याऽत्यन्तादराद् द्रुतम् । प्रेषिता बहवो लेखाः सूरेराकारणाय च ॥६७
तदा पुरे नागपुरे श्रीगुरुर्विहरन्नभूत् । लेखहारकहस्तेन लेखास्तत्रागता द्रुतम् ॥६८॥

---

६०—आरासणे स्वप्रतिष्ठितमूलनायकार्हद्बिम्बानां, चकारात् अर्बुदाद्रावपि महता सङ्घेन सह यात्रां कुर्वन् । सीरोहीनगरादिष्वपि आदिशब्दाद् बम्भणवाडि-वसन्तपुराद्यनेकतीर्थयात्रां कुर्वन् । चः पुनः स्वर्णशैलीयः स्वर्णगिरिसम्बन्धी यो देशस्तत्र रामसैन्य—भिन्नमालादिषु यात्रां कुर्वन् । चः जाबालपुरे चतुर्मासीं कुर्वन् ।

६१—मरुदेशे मेडताकोट्टे चतुर्मासीद्वयं तद्देशे च घंघाणिग्रामे सम्प्रतिभूपतिकारितार्जुनस्वर्णमयप्रतिमानां, ओसवालानां उत्पत्तिस्थाने ऊकेशनगरे आदिशब्दात् तिमिरीपार्श्वनाथादीनां यात्रां कुर्वन् ।

६२—सवालखनामके देशे श्रीनागोरनगरे चतुर्मासीं कृतवान् । इत्यादयो ये व्यावर्णिता द्रङ्गा देशाश्च तेषु गुरुर्वृषवद् वृषभ इव अथवा वृषो धर्मस्तद्वत्साक्षाद्धर्म इवाथवा वृषवत्सु पुण्यवत्सु गुरुर्महान् वृषवद्गुरुः श्रीविजयदेवसूरिर्व्यहार्षीत् विहारमकरोत् । अत्र यत्र यावन्त्यः प्रतिष्ठाः कृतास्ता मयाऽन्यगच्छीयत्वात् सम्यग् न ज्ञायन्ते तेन तत्संख्यानं तु तपागच्छीयश्रीविजयप्रशस्तिमहाकाव्यादिभ्योऽवसेयामिति तत्वं । सप्तश्लोकीकुलकव्याख्येति ।

६३—इत इत्यधिकारान्तरे । एकदा सदास्वास्थ्यस्य नित्यसुभिक्षादिसुखस्य निबन्धनं कारणं । अत्र एवकारोऽन्ययोगव्यवच्छेदकस्तेन नान्यत्कारणं । आकर्ण्येति श्रुत्वा । शेषं सुगमम् ।

६५—यच्चिन्तितं तदेवाह—सुगमोऽयं नवरं अन्तरान्तरापतत्यपि दुष्काले मरौ अष्टाब्दावधीति अष्टौ वर्षाणियावत् शाश्वतं सुभिक्षमेवाजनीति । अहो इति आश्चर्यसूचकमव्ययम् ।

६७—अत्र चकारात् अन्यैरपि श्रीराणकमान्यैः सामन्तामात्यपुरोहितभट्टपण्डितपञ्चोलीप्रमुखैः सूरेः श्रीविजयदेवगुरोः, आकारणायेति मेदपाटदेशे आगच्छन्त्विति विज्ञप्तिः कृतेति तात्पर्यम् ।

सूरिः सपरिवारोऽपि हृष्टस्तल्लेखवाचनात् । कस्य न स्यान्मदोऽमन्दो हीन्दूच्छत्रपतेर्हवे ॥६९॥
श्रीराणाकारणं तस्य गुरोः श्रुत्वा तदा मुदा । सर्वस्संघश्चमच्चक्रे वक्रेतरतराशयः ॥७०॥
तदानीं मेदिनीद्रङ्गवासी सङ्घोऽनघो घनः । श्रीमन्नागोरनगरे गुरुं नन्तुमुपागमत् ॥७१॥
सौवर्णै रौप्यकैः पुष्पैः शक्तिभक्त्यनुसारतः । पूज्यः पट्टधरेणामा श्रावकैः पूजितस्ततः ॥७२
मेडतीयस्य संघस्याग्रहतश्चलितस्ततः । श्रीनागोरीयसंघेन संयुतः संयताधिपः ॥७३॥
सपादलक्षदेशीयजन्तुजातं प्रबोधयन् । क्रमेण फलवर्द्धीशं श्रीपार्श्वप्रभुमानमत् ॥७४॥
गुरुः श्रीपार्श्वतीर्थेशमेकमेव तदाऽनमत् । जङ्गमं तीर्थमायान्तं तं जना बहवोऽनमन् ॥७५॥
कुशलात्सागरा विज्ञा गुरुभिर्वाचकाः कृताः । यतो महीयसि पदे ते महाफलदाः खलुः ॥७६॥
अत्रान्तरे गूर्जरत्रासत्कः संघो महर्द्धिकः । समागाच्छर्करापात इवाभूदुग्धमध्यगः ॥७७॥
तेन संघेन सर्वेण शर्वेणेवोरुभूतिना । पूजितास्तत्र तीर्थेशाः श्रीपूज्याचार्यसंयुताः ॥७८॥
अथ नागपुरीसंघे गुरुं नत्वा गृहं गते । गुरवो गुरुसंघाढ्याः प्रापुः श्रीमेडतापुरीम् ॥७९॥
जयमल्लाख्यमन्त्रीशस्तत्रागाद् गुरुसंमुखः । कुर्वन्महोत्सवाद्वैतमौन्नत्याच्चित्तवित्तयोः ॥८०॥

---

६९—पूर्वार्धं सुबोधं हीन्दूछत्रपतेः श्रीराणाजीकस्य हवे आकारणे सति कस्यान्यस्य लोकस्य मदोऽहङ्कारः, गुरोस्तु स सर्वथा नास्तीति गुरुपक्षे मदो हर्षः । यदनेकार्थः—मदोऽहङ्कारे हर्षे चेति । हर्षोऽपि गुरोर्जिनशासनोन्नतिर्भाविनीति हेतोः ।

७०—वक्रात् इतरो वक्रेतरः सरल इति यावत् । अतिशयेन वक्रेतरो वक्रेतरतरः आशयोऽभिप्रायो यस्य सोऽतिसरलमना इति । अत्र प्रकृष्टेऽर्थे तरतमाविति तरप्रत्ययोऽतिशयार्थवाचक इति।

७२—पूज्यः श्रीभट्टारकः । पट्टधरेण श्रीविजयसिंहसूरिणा अमेति सार्धं । साकं सत्रासनं सार्धममा सह ति श्रीहैमनामकोशे । तेनात्रामायोगे तृतीयाऽन्यत्स्पष्टम् ।

७३—संयतानां साधूनामधिपो गुरुरित्यर्थः ।

७५—द्वितीयपदे—णम् प्रह्वीभावे इत्यस्य धातोः अनद्यतन्या विभक्तेः परस्मैपदैकत्वम् चतुर्थपदे तस्यैव धातो बहुत्वं । जनानां बहुत्वं तु नागोरमेडताद्यनेकस्थानीयमहाजनसमागमादिति ।

७६—पश्चिमार्धे—यद्धेतोस्ते गुरवः सूरयः बृहस्पतयश्च महीयसि पदे स्थाने फलवार्द्धिमहातीर्थलक्षणे, पक्षे महीयसि उच्चस्थाने समागतास्सन्तो महाफलदा भवन्त्येवेति ज्योतिर्विदां मतम् ।

७८—अत्र द्वितीयपदे—शर्वेण ईश्वरेणेव । किं० उर्वी भूतिः सम्पद् यस्येति तेन; पक्षे भूतिर्भस्म यस्य तेनेति । शेषं सुबोधं ।

७९—सुगमं । परं गुरवः सूरयः । किं० गुरुणा महता सङ्घेन गूर्जरत्रासत्केन मेडतासत्केन च आढ्यास्सन्त इति ।

आग्रहाज् जयमल्लस्य मेडतीयजनस्य च। कियत्कालं स्थितस्तत्र संघः सोऽगाद्यथागतम् ॥८१॥
श्रुत्वा गुरूणामाह्वानं मेदपाटनरेशितुः। मन्त्रीशो जयमल्लस्तु दोदूयां भृशमाप्तवान् ॥८२॥
बहुशो जयमल्लेन विज्ञप्तोऽपि गुरुर्यदा। नैव तस्थौ तदा मन्त्री राजकार्यं ययौ क्वचित् ॥
गुरवस्तु मिषं प्राप्य तदैवाशु प्रतस्थिरे। श्रीवाडीपार्श्वयात्रार्थं वाटिकान्तरुपागताः ॥८४॥
तदा गुरूननुमेता धर्मचन्द्राभिधा बुधाः। कारुण्यपूरितैः पूज्यैस्ते तदा वाचकीकृताः ॥८५॥
ततः श्रीमेडताद्रङ्गाद्राणाजीकस्य भाग्यतः। प्रति मेवाडदेशं ते चलिताः कलिता जनैः ॥८६॥
क्रमेण गोढवाडान्तर्ग्रामे ग्रामे पुरे पुरे। आगृह्यमाणा बहुभिः संघैस्सुकृतकृद्व्ययैः ॥८७॥
नैव तस्थुः क्वचित्किन्तु तीर्थयात्रां प्रचक्रिरे। नड्डूलनगरे विन्ध्यपुरे श्रीवरकाणके ॥८८॥
श्रीमन्नारदपुर्यां च जीवितस्वामिनेमिनः। सादडीस्थानके राणपुरे च प्रथमप्रभोः ॥८९॥
इत्यादिसत्तीर्थयात्रां कृत्वा सत्संघसंयुतः। गुरुर्घाणपुरे प्रापत्तद्वार्ता मेदपाटके ॥९०॥ युग्मम्।
ततो मेवाडदेशेन्द्रमान्यो झालाकुलोद्भवः। राणः कल्याणजी नाम प्राग्देवकुलपाटकात् ॥९१॥
घाणेराख्यपुरं यावत् गुरोस्संमुखमागमत्। घनाश्वसुभटश्रेणिरोचिष्णुर्गुरुमानमत् ॥९२॥
दृष्ट्वा तद्भक्तियुक्तिं च श्रुत्वा वाक्यकलामपि। समग्रगोढवाडीयो लोकोप्याश्चर्यभागभूत् ॥
सत्यंकारं गुरोर्लात्वा तत्र पादावधारणे। द्राग देलवाडकेऽभ्येत्य जने गुर्वागमं जगौ ॥९४॥
अथ श्रीसूरिरारोहन्मेदपाटोर्ध्वभूमिकम्। षमणोरपुरस्थायी संघोऽप्यभ्यागमद्गुरोः ॥९५॥
षमणोरपुरे सूरेरागमात्पूर्वमेव हि। प्रतिष्ठाविधिसामग्रीं सर्वां सङ्घोऽप्यकारयत् ॥९६॥
जलयात्रां गजेन्द्राश्वध्वजाद्याडम्बराद् व्यधात्। तेनैवाडम्बरेणोच्चैश्चक्रे गुर्वागमोत्सवः ॥९७॥
तत्रत्याः श्रावकाः क्षेमा-गङ्गा-जेसाभिधानकाः। त्रयस्सहोदराश्चक्रु प्राक्प्रतिष्ठामहोत्सवम् ॥९८॥

---

८१—पदत्रयं तु सुगमं। स गूर्जरदेशीयः सङ्घो बहुविज्ञप्तिं कृत्वा पूज्याचार्यान्नत्वा च यथागतं राजनगरादिस्थानं अगात् गत इति।

८२—मेदपाटनरेशितुः श्रीराणाजीकस्य आह्वानं श्रुत्वा गुरून् मरुदेशे एव रक्षितुकामो जयमल्लमन्त्री हृदि दोदूयामासेति।

८६—श्लोकपञ्चकं कण्ठ्यम्। तत्र तुर्यश्लोके जनैर्लोकैः किञ्चिदाजीविकार्थिभिः कलिताः सहिताः। अथवा कलण ज्ञाने इत्यस्य धातोर्ज्ञानार्थत्वात् कलिता ज्ञाता न तु केनाप्यज्ञाता इति।

८७—अत एव अग्रेतनश्लोके बहुग्रामनगरसंघैः सुकृतकृत्यलाभैर्लोभिता अपि चतुर्मासी-कृते आगृह्यमाणाह, वा इक्ष्यमाणा अपि गुरवः किं च क्रुरित्यग्रे प्राह।

९४—सुगमः परं देलवाडाख्ये स्वराज्यस्थाने अभ्येत्य आगत्य। जने इत्यत्र जातावेकवचनं तेन समस्तलोके उदयपुरादौ गुर्वागमनं पूज्यागमनं जगौ कथयति स्मेति।

[illegible]शुभे दिने। कृत्वा प्रतिष्ठामुत्कृष्टां ततस्सूरिवरोऽचलत् ॥९९॥
गत्वा कल्याणजीराज्यास्पदे द्राग् देलवाडके। मन्त्रिमुख्येन मांडाख्यश्राद्धेन विहितोत्सवम्॥
श्रीशालिशैलबिम्बानां प्रतिष्ठां सूरिराड् व्यधात्। तस्मिन्महोत्सवे मेघो ववर्ष स्पर्धयेव किम्॥
तत्र गत्वानेकचैत्यानां वन्दनं च विलोकनम्। उपदेशप्रदानेन जीर्णोद्धारश्च निर्ममे ॥१०२
अथोदयपुरीयोऽपि संघस्तत्रैत्य सत्वरम्। विधाय विविधां भक्तिं विज्ञप्तिं च पुरो गुरोः ॥१०
[illegible]कुनान्वीक्ष्य श्रीपूज्याचार्यवर्ययोः। चतुर्मासकसम्बन्धि वचः प्राप्य पुरं ययौ ॥१०४॥
गुरुर्नागह्रदे नत्वा श्रीपार्श्वं नवखण्डकम्। अद्बुदं शान्तिनाथं च श्रीआघाटमुपागमत् ॥१०५॥
तपेति बिरुदप्राप्तिस्थानेऽत्राघाटपत्तने। सर्वोदयपुरीयोऽपि सङ्घोऽगाद्वन्दितुं गुरुम् ॥१०६॥
अथाषाढादिमेघस्रे सुर[illegible]स्य वारके। पवित्रे पुष्यऋक्षे च शुभेषु शकुनादिषु ॥१०७॥
[illegible] गुरून् ज्ञात्वा श्रीजगत्सिंहराणकः। संघायादात् सम्पदं स्वां समग्रां सिन्धुरादिकाम्॥
अथ सज्जीकृतोत्तुंगतोरणश्रेणिबन्धुरम्। राणाजीदत्तपूर्वोक्तसामग्रीप्रीणितप्रजम् ॥१०९॥
शृङ्गारिताशेषजनस्त्रीगीतोद्दाममङ्गलम्। पुरं प्रविश्य सुगुरुः प्रतिश्रयमुपाश्रयत् ॥११०॥
अथ तत्रोत्सवाद्वृते चतुर्मासं गुरुर्व्यधात्। श्रीमदाचार्यधुर्यस्तु श्रीआहडपुरे पुनः ॥१११॥
आघाटे वीरचैत्यस्य जीर्णोद्धारो व्यधायि च। संघेन श्रीमदाचार्यवाक्कलाप्रीतचेतसा ॥११२॥

---

१०१—श्लोकसप्तकं कण्ठ्यं। परं सप्तमश्लोकार्द्धे—तस्मिन्महोत्सवे यथा सर्वोऽपि संघलोको गुर्वागमात् प्रीतस्सन् वित्तैर्ववर्ष। तथैव तत्स्पर्धया मेघोऽपि मुशलधाराभिस्तथा ववर्ष यथा सर्वापि पृथ्वी जलमयी जातेति। अनेन तदानीं गुरुमाहात्म्यादेव लोके हर्षदानाधिक्यं मेघागमनं चासूचि।

१०२—तत्र तस्मिन् देवकुलपाटके अनेकचैत्यानां शत्रुञ्जयगिरिनारावताराणां बहूनां तु तपागच्छेन्द्रश्रीसोमसुन्दरसूरिवारके जातानां केषांचित्तु श्रीविजयदेवसूरिवारके तदुपदेशादेव तद्गच्छीयैः पण्डितकीर्तिविजयैः श्रीराणाजी श्रीकल्याणजी प्रतिबोधन तत्सहीकारापणप्रासादपातननिवारण-वाकलारक्षितानेकनागर-व्यवहारि-चारण-ग्रामेश्वर-ठक्कुरोपदेशप्रदान-बहुद्युम्नानयनाद्युद्यमेन जीर्णोद्धारविषयीकारितानां पुनः सज्जीकृतमण्डितप्रतिमाणां चैत्यवन्दनं निर्ममे। पतितानां चैत्यानां च विलोकनं पुनरुपदेशद्वारेण जीर्णोद्धारश्च कारितस्तत्र चैकस्य कल्याणवसहीति नामकप्रासादस्य श्रीकल्याणजीकेनोद्धारकरणं प्रातिवर्षमष्टाधिकशतच्छागवधनिवारणं च प्रतिपन्नमिति।

१०८—अत्र सिन्धुरादिकां गजादिकां आदिशब्दादनेकतुरङ्गमात्मीयमहावाद्यध्वजबन्धननगरशृङ्गारणाज्ञादिग्रहः। शेषमन्वयादिकं स्पष्टम्।

दर्शनादेव पूज्यानामाचार्याणां गिरापि च। मिथ्यात्विनोऽपि विप्राद्यास्तत्रासन् प्राप्तबोधयः॥
तस्मिन् वर्षे ववर्षाब्दोऽवृष्टपूर्वोऽद्भुतावहः। यं दृष्ट्वा मानवाः प्राहुश्चतुर्थारष्किमागतः ॥११४॥
श्रीजगत्सिंहराणोऽपि चमत्कारात्ततोऽवदत्। सत्यं सुगालिओ मर्दः समागादत्र सद्गुरुः ॥
ततः प्रभृति सर्वत्र सुकालभवनाद् भुवि। असौ सुगालिओ मर्द इति ख्यातिरभूद् गुरोः ॥
कदा स वासरो यत्र भावी मे गुरुसङ्गमः। इति ध्यायन् राजकार्यव्यग्रत्वान्नृपतिः स्थितः ॥
अथ पारणके जाते चतुर्मास्या मुनीश्वरः। मेवाडदेशे व्यहरत्तीर्थयात्रार्थमुद्यतः ॥११८॥
गुरुः श्रीकरहेडादितीर्थयात्रां विधाय च। चित्रकूटमहादुर्गं दूरादप्यवलोक्य च ॥११९॥
खमणोरपुरं प्राप्य प्रतिष्ठां चरमप्रभोः। मोहीग्रामीयसंघेन कारितामकरोत्ततः ॥१२०॥
ग्रामे गोगुंदके गत्वा नत्वा श्रीनवपल्लवम्। नाहीनाम्नि सन्निवेशे तथाप्याघाटपत्तने ॥१२१॥
एकैकां क्रमतश्चक्रे प्रतिष्ठां शिष्टहृद्गुरुः। एवं देशे मेदपाटे प्रतिष्ठापञ्चकं कृतम् ॥१२३॥
अथ गूर्ज्जरदेशेषु ज्ञात्वा चिचलिषून् गुरून्। प्रागप्युत्कण्ठितो दृष्टुं श्रीजगत्सिंहराणकः ॥१२४
पींछोलाख्यसरोमध्ये महोद्यानान्तरालगम्। दलवादलके सौधे प्राच्यराणककारिते ॥१२५॥
आश्चर्यकारके नाकिविमानमदहारके। नानामहोम्बरामुख्योद्भटभट्टयुतोऽभ्यगात् ॥१२६॥
दर्शनादेव सूरीन्दोर्नत्वावर्तादिपूर्वकम्। कृताञ्जलिपुटस्तस्थौ सुविनीतस्सुशिष्यवत् ॥१२७॥

---

११३–श्लोकचतुष्कं कण्ठ्यं। अन्तिमे श्लोके तत्रेत्युदयपुरे विप्रभट्टराजपुत्रादयोऽनेके मिथ्यात्विनोऽपि प्राप्तबोधयोऽङ्गीकृतशुद्धधर्मा आसन् जाताः। किं बहुना ? केचित्षडावश्यक-भक्तामरादिपाठिनो जाताः।

११९–अत्र पञ्चमे श्लोके स मुनीश्वरः श्रीविजयसिंहसूरिसंयुतोऽनेकलोककृतां विज्ञप्ति-मवधार्य तदुपकारायानेकतीर्थानां श्रीकरहेडकपार्श्वनाथादीनां यात्रां विधानाय च मोहीग्रामवासि-सङ्घकारितप्रतिष्ठाकरणाय च श्रीराणाजीकेन घनतरं सङ्घद्वारा विज्ञप्तोऽपि श्रीराणाजीकेन सह मिलने मम महालाभो भावीति पुनरत्र पादावधारणीयमेवेति सङ्घविज्ञप्तिं प्रतिपद्य च दश-सहस्रमेवाडदेशे व्यहरदिति।

१२६– श्लोकत्रिकं कण्ठ्यं। परं प्राच्यः प्राचीनो यो राणकः अर्थाच्छ्रीउदयसिंहाख्यः श्रीउदयपुरनिवासकः पुनरुदयसागरसरोवरकारकश्च तेन कारिते।

१२७–सौधे पुनः किं० नाकिनां देवानां विमानस्य मदहारके अत एवाश्चर्यकारके दलवा-दलनाम्नि महलविशेषे। राणकः किं० नानाजातीया ये उम्बरा वागियाख्याः पितृव्यश्रीशेषाजी श्रीकृष्णदासजीश्रीसबलसिंघजीश्रीसुजाणसिंघजीश्रीमानसिंघजीश्रीभीमजीश्रीइन्द्रभाणजीमुख्याः। पुनः उद्भटा ये भट्टा व्याकरणादिपाठिनो भट्टवासुदेवहरिपाठकप्रमुखास्तैर्युक्तः श्रीजगत्सिंहराणकः श्रीगुरून् शतावधानाऽष्टावधानादिसाधकानेकच्छेकच्छात्रपरिवृतान् द्रष्टुं अभ्यागादागत इति।

गुरुरपि किं कृतवानित्याह–

गंभीरध्वनिना तस्मै धर्मलाभं गुरुर्ददौ । नम्राय मेदपाटानामधीशाय हसन्मुखः ॥१२८॥
ततो गुरोरेव मुखे न्यस्तनेत्रो नरेश्वरः । अद्य मे सफलं जन्म जातमित्यूचिवान्मुदा ॥१२९॥
गुरुणा दीयमानायां देशनायामथान्तरे । प्राचे पृथ्वीपतिः स्वामिन् विज्ञप्तिं मेऽवधारय॥१३०
आयुर्घनतरं केन कर्मणा प्राप्यते प्रभो । सम्यग् विज्ञाय शास्त्रेभ्यस्तस्योपायं समादिश ॥१३१
अथोवाच गुरू राजन् सावधानमनाः शृणु । पूर्वं श्रीभीमभूपालो जातोऽणहिलपत्तने ॥१३२॥
दीर्घायुषोऽन्यदा श्रुत्वा सोऽथ मालवभूपतीन् । धारायां भोजराजस्य पार्श्वे प्रैषीत्स्वमन्त्रिणम्॥
गत्वा नत्वा च तेऽप्यूचुः पृष्टं भीमेन वोऽस्त्यदः। कथं दीर्घायुषो यूयं वयं त्वल्पायुषः कथम् ॥
येनोपायेन दीर्घायुर्भवेद्भीमस्तमादिशत् । तिष्ठन्तु भो कियत्कालं सुखं भोजोऽप्यदोऽवदत् ॥
वृक्षमेकमथोद्दिश्य भोजः प्रोचे च मन्त्रिणम् । जातेऽस्मिन् सर्वथाऽपत्रे तवोपायो वदिष्यते ॥
पत्राण्यस्य पतन्तु द्रागिति दध्यौ स मन्त्रिराट् । तच्चिन्तयैव वृक्षोऽभूत् निष्पत्रः पूर्वतो द्रुतम् ॥
अथोपाये च तत्पृष्टे स्पष्टं भोजोऽप्यवक् पुनः । सर्वथा फलिते वृक्षेऽस्मिन्नुपायोऽथ वक्ष्यते ॥
सत्फलः फलदः शीघ्रं स्तादेवं चिन्तितोऽमुना । पुरा नैवाभवद् यादृक् तादृक् स फलितः क्षणात् ॥
हसन्नथो भोजनृपः प्राह तं भीमधीसखम् । तव ध्यानाद्यथा वृक्षो जातोऽपत्रश्च पत्रयुक् ॥
तथा प्रजानां दुर्ध्यानादल्पायुः स्यादिलापतिः । प्रजानां च शुभध्यानादनल्पायुः पुनर्भवेत् ॥
दीर्घस्य जीवितस्येति श्रुत्वोपायमिमं स्फुटम् । यथादृष्टं जगौ गत्वा पत्तने भीमभूपतेः ॥१४२॥
ततः प्रभृति भीमोऽपि प्रजानां परिपालनात् । चिरं राज्यं च भुंक्ते स्म लोकानां हितचिन्तनात् ॥
तथा त्वमपि भूपाल लोकपालोऽसि पञ्चमः । चिरायुर्भव लोकानामन्योऽन्यहितचिन्तनात् ॥
श्रीजगत्सिंहजीराणः श्रुत्वेति गुरुदेशनाम् । साधु साधु वदन्नुच्चैः स्वं शिरो धूनयन्मुहुः ॥
गुरो त्वद्दर्शनादेव नूनं भावी जयो मम । गुरुरूचे पुना राजन् यतो धर्मस्ततो जयः ॥१४६॥

अथ राणकः प्राह–

स धर्म्मः कीदृशः स्वामिन् यतो नित्यं जयो भवेत् । गुरुर्जगौ शृणूर्वीश स तु जीवदयामयः ॥
अथ श्रीराणकः स्माह रञ्जितो गुरुवाक्यतः । यद्युष्माकमभीष्टं तद् ब्रूत सर्वं करोम्यहम् ॥१४८॥
ततो गुरुर्जगौ राजन् जालपातान्निषेधय । पींछोलाख्ये तटाके च तथा तूदयसागरे ॥१४९॥
जन्मनो मासि भाद्राख्ये जीवहिंसां निवारय । जन्ममासे यतः शाहि-दिल्लीनाथोऽप्यपालयत् ॥
राज्याभिषेकवारेऽपि गुरौ हिंसां निवारय । मचिन्दनामके दुर्गं जीर्णोद्धारं च कारय ॥१५१॥
गुरूक्तांश्चतुरो जल्पानेतान् स प्रत्यपद्यत । तदैवारोपयद् घाटं जालक्षेपनिषेधकम् ॥१५२॥
लात्वेति नियमान्नत्वा गुरुं द्राग् मेदपाटराट् । ययौ स्वं सौधमात्मीयपरिवारविराजितः ॥१५३
अथो गुरुर्गूर्जरत्रां प्रति प्रस्थातुमुत्सुकः । संघेन रक्ष्यमाणोऽपि समीनाग्राममागमत् ॥१५४॥

प्रणम्य पार्श्वविश्वेशं तत्र तस्य प्रभोः पुरः । गुणविजयविज्ञानामुपाध्यायपदं ददौ ॥१५५॥
ततश्च योगिनीपुर्यां तीर्थयात्रां व्यधाद् गुरुः । कोटडीग्रामचैत्यानि पञ्च पूज्यान्यकारयत् ॥
ततः श्रीऋषभं नाथं नत्वा वागडसन्धिगम् । गुरुः क्रमादिलादुर्गं प्राप्तवान् जन्मभूमिकाम् ॥
गुरुराकारयां चक्रे पुत्रप्रेषणपूर्वकम् । रत्ननाम्ना महेभ्येनाहम्मदावादवासिना ॥१५८॥
श्रीशत्रुञ्जययात्रायै संघः संमेलितो महान् । रत्नेन घनयत्नेन गुरुश्चाग्रेसरीकृतः ॥१५९॥
ततस्तत्र महातीर्थे यात्रां कृत्वा महोत्सवैः । गुरुभ्यां सह संघोऽसौ क्षेमेणागान्निजं पुरम् ॥
तत्र कृत्वा चतुर्मासं सोल्लासं तस्य पारणे । स्तंभतीर्थे महातीर्थे ननाम गुरुपादुकाम् ॥१६१॥

इदानीं तपागच्छीयश्राद्धादिमुखाद्यथा मया श्रुतं तथा देवसान्निध्यं श्रीविजयदेवसूरेर्वण्यते–
अथास्य देवसान्निध्यमहं वक्ष्ये यथा श्रुतम् । स्तंभतीर्थेऽभवद्देवचन्द्रो नाम्ना महान् गृही ॥
स तु श्रीविजयदेवसूरिं शुद्धपरम्परम् । जानंस्तदुक्तमेवायं कुरुते धर्ममार्हतम् ॥१६३॥
तस्य भार्ये उभे जाते सुशीले अपि सन्ततम् । ते तूपाधिमतं नैव त्यजतो वारिते अपि ॥१६४
कालान्तरेण ते देवीभूतेनाप्यथ तेन हि । परंपरागतं धर्मं कुर्वातामिति भाषिते ॥१६५॥
इति प्रोक्तेऽपि ते नैव त्यजतस्तन्मतं यदा । तदा तस्यैव श्राद्धस्य प्रेत्यवासरकर्मणि ॥१६६॥
उपाधिमतरक्तेषु निविष्टेषु जनेष्वथ । दृषद्वृष्टिस्तथा चक्रे नेशुस्सर्वेऽपि ते यथा ॥ युग्मम् ।
प्रदोषे प्रकटीभूतं प्रोचतुस्ते स्त्रियौ च तम् । त्वं कोऽसि कस्मादागत्य नित्यं भापयसीह नौ ॥

---

१५५–एते सुगमाः । परं गुणविजयाख्या ये विज्ञाः पण्डिताः पूर्वं सादडीग्रामे लुम्पाकैर्विग्रहे क्रियमाणे श्रीकर्णराणकामिलनेन तपाः सत्या लुङ्काश्चासत्या इतिस्फुरन्मानकारापणपूर्वकं श्रीगुरुप्रभावाज्जिनशासनस्थापकास्तेषां श्रीसमीनाख्यपार्श्वनाथप्रतिमायाः पुरो गुरुर्वाचकं पदं ददौ दत्तवानिति ।

१६०–एते सुगमाः । परं तत्र महातीर्थे शत्रुञ्जये यात्रां कृत्वेति श्रीऋषभदेवादीन्नत्वेति गुरुभ्यां श्रीपूज्याचार्याभ्यां सह स रत्नश्रावकसङ्घः कुशलेन निजं पुरं राजनगरं आगात्प्राप्त इति ।

१६१–सुबोधोऽयं । गुरोः श्रीविजयदेवसूरेर्निर्वाणस्था[illegible]स्तूपे पादुकां ननामेति नतवानिति भावः ।

१६४–सुगमम् । नवरं तस्य देवचन्द्रस्य श्राद्धस्य द्वे अपि भार्ये संवत् १६७३ वर्षोत्पन्नं द्रव्यलिङ्गिना द्रव्यग्रहणपूर्वकं स्थापिताचार्यकं पञ्चभिरुपाध्यायैः कर्षितत्वादुपाधिनामकं मतं धनिकेन वारिते अपि ते न त्यजत इति ।

१६६–अथ किं जातमित्याह–कालान्तरेणेति सुगमं । परम्परागतं धर्मं श्रीविजयदेवसूरिक्रियमाणं कुर्वतां, उपाधिमतं तु त्यज्यतामिति ।

सोऽप्यूचे युवयोर्भर्तार्हं देवो देवचन्द्रकः । भवत्योः प्रतिबोधाय दृषद्वृष्टिर्मया कृता ॥१६९॥
अहं श्रीविजयदेवसूरिसान्निध्यमन्वहम् । कुर्वाणोऽस्मि सुरैः सप्तदशभिश्चापरैः सह ॥१७०॥
इत्युक्ते तेन ते जाते सद्यः सद्धर्मनिश्रिते । मुक्त्वोपाधिमतं को हि सत्याज्ये तैलमीहते ॥१७१
इत्येकं देवसान्निध्यं. द्वितीयं शृणुताधुना । श्रीमण्डपाचलं दुर्गं चलति प्रति सद्गुरौ ॥१७२॥
मार्गे सेहरषीग्रामस्वामिपुत्रः कमाभिधः । परमारः स भूत्वार्तं इत्यभूत्परमारकः ॥१७३॥
मारयन् स बहूँल्लोकान् पित्रा निगडितस्ततः । तस्मिन्नवसरे तत्र सूरिसिंहस्समागतः ॥१७४॥
महान्तमागतं मत्वा वासक्षेपोऽस्य कारितः । सज्जोभूत्तत्क्षणात्साऽपि जातं तच्चित्रकृत्सताम् ॥
द्वितीयं देवसान्निध्यं, प्रोच्यतेऽथ तृतीयकम् । श्रीराजनगरस्थायी कोऽप्यस्ति वणिजः सुतः ॥
सप्तवर्षाणि यावत् स ग्रहिलोऽभूदभाग्यतः । तत्रागाच्चाष्टमे वर्षे तद्भाग्यात्सद्गुरूत्तमः ॥१७७॥
पित्रादिभिस्तदाऽकारि करन्यासोऽस्य मस्तके । तत्कालं सोऽपि सज्जोऽभूत्सर्वो लोकश्चमत्कृतः॥
चतुर्थं देवसान्निध्यमथो शृणुत सज्जनाः । मेडताद्रङ्गवास्तव्यः श्राद्धः खीमसरान्वयी ॥१७९॥
नवमासावधिस्थानाभिधो दुष्कर्मयोगतः । गृहीतः क्षेत्रपालेन भृशं दुःखाकुलोऽभवत् ॥१८०॥
तत्रागादन्यदा भाग्याद्विजयदेवसूरिराट् । वासक्षेपेण तस्याशु क्षेत्रपालः प्रणष्टवान् ॥१८१॥
नीरोगता तदीयेऽङ्गे भूतले च चमत्कृतिः। वार्ता च सकले संघे जाताहो महिमा गुरोः ॥१८२
अथातः प्रोच्यते देवसान्निध्यं पञ्चमं प्रभोः । अस्ति गूर्जरदेशान्तः ेटलादाभिधं पुरम् ॥१८३॥
तत्रासीदधिपः क्रूरः स्वभावादेव दुष्टहृत् । व्युद्ग्राहितो विशेषेण द्वेषिभिर्वेषधारिभिः ॥१८४॥
वणिग्भिः प्रत्यनीकैश्च द्रव्यलोभेन लोभितः । रुरोध निर्विरोधं तं तदा तत्रागतं गुरुम् ॥१८५॥
गोपुरान्तर्वेदिकायां विमुच्य सपरिच्छदम् । रक्षार्थं मानुषान्मुक्त्वा स्वयं स्वावासमाविशत् ॥
अथ सायं गुरुस्तत्र चिन्तयामास चेतसि । इह नः शयनं युक्तं नक्तं नैवेतरैः सह ॥१८७॥
ध्यात्वेति तत्र वप्रान्तर्गत्वैकस्य तरोस्तले । सुष्वाप सपरीवारो वार्यमाणो जनैर्घनैः ॥१८८॥

अथ तत्र यज्जातं तदाह—

प्रतोलीपार्श्वगेहान्तर्वह्निर्दारुभरेऽलगत् । तज्ज्वालाभिः करालाभिः प्रतोली सहसाऽपतत् ॥
तया पतन्त्या तत्राधः सुप्ता ये रक्षकादयः । तत्क्षणात्ते क्षयं प्राप्ता अहो दुष्कर्मणां गतिः ॥१९०
गुरुं कुशलिनं दृष्ट्वा सुखसुप्तं तरोस्तले । वर्णयन्ति स्म राजाद्या अहो ज्ञानी गुरुर्महान् ॥१९१॥

---

१८७–पूर्वार्धं सुबोधं। इहेति अत्र प्रतोल्यधः सुस्थानवेदिकायां इतरैर्नीचैस्तुरुष्कादिभिः सार्धं नक्तं रात्रौ नोऽस्माकं शयनं नैव युक्तं नोचितमिति ।

१८८–गुरुर्घनैर्जनैस्तैरारक्षकैरन्यैरपि तत्रागतैः पथिकैः खीनरैर्मा याहीति वार्यमाणोऽपि तरोस्तले गत्वा पौरुषीविधिपूर्वं सुष्वाप शेते स्मेति ।

चमत्कृतेन तेनाथ यवनेन नतस्ततः । सत्कृतः क्षामितस्सूरिर्ययौ च स्थानमीप्सितम् ॥१९२॥
श्रीगुरोर्दैवसान्निध्यं स्पष्टं षष्ठमथो ब्रुवे । अष्टौ वर्षाण्यविच्छिन्नं सुभिक्षमभवन्मरौ ॥१९३॥
मरुस्थल्यां हि दुष्कालः शाश्वतः श्रूयते जनैः । अष्टवर्षावधि स्पष्टं नैव दृष्टः स केनचित् ॥१९४
महाजनमुखादेतच्छ्रुतं यन्निर्जले स्थले । गुरौ विहरति ज्येष्ठे मासिऽवर्षद् घनो घनः ॥१९५
अन्यदा स्तंभतीर्थेऽगाद् वत्सरैर्भूरिभिर्गुरुः । तदास्य दर्शनादेव बोधिं प्रापुस्सुमेधसः ॥१९६
यतः–सागरीयं मतं त्यक्त्वा मेघाद्याः श्राद्धमुख्यकाः । बोधिं प्राप्ता गुरोरेव वासक्षेपमकारयन्॥

अथास्य काव्यस्योपसंहारमाचरन्नाह–

इत्यादिभिर्घनतरैरवदातवृन्दैश्चेतश्चमत्कृतिकरैश्चतुरोत्कराणाम् ।
प्राचीनसूरितुलनां कलयन् कलौ किं श्रीगौतमः पुनरयं गुरुरेष जीयात् ॥१९८॥
किं चान्यगच्छीयतया मया यत् संसूत्रितं शास्त्रविरुद्धमत्र ।
तत्सत्यमेवाथ बुधैर्विधेयं काव्योत्तमाच्छ्रीविजयादिवंशात् ॥१९९॥

अथैतत्काव्यकरणे पराशङ्कामाविष्कृत्य निराकुर्वन्नाह–

यदन्यगच्छप्रभवः कविः किं मुक्त्वा स्वसूरिं तपगच्छसूरेः ।
कथं चरित्रं कुरुते पवित्रं शंकेयमार्यैर्न कदापि कार्या ॥२००॥
आत्मार्थसिद्धिः किल कस्य नेष्टा, सा तु स्तुतेरेव महात्मनां स्यात् ।
आभाणकोऽपि प्रथितोऽस्ति लोके, गंगा हि कस्यापि न पैतृकीयम् ॥२०१॥

---

१९५–सुगमोऽयं । नवरं निर्जल इत्यपेयक्षारकूपैक्यसद्भावात् मिष्टनीराऽसद्भावात्, अजले स्थले ओकेशादिस्थले गुरौ श्रीविजयदेवसूरौ विहरति सति अग्रतो ग्रामे ग्रामे घनोऽतिशायी घनो मेघोऽवर्षत् वृष्टः । येन यत्र प्रातर्गुरुः समागात्तत्र सरांसि भृतानि दृष्टानि इति योधपुरस्थेन मया महाजनमुखात् श्रुतमिति सत्यमेवेति ।

१९७–अर्थः सुगमः । परं सागरीयं मतमित्येव । तदुत्पत्तिर्यथा तपागच्छीयैरेवोपाध्याय-श्रीधर्मसागरैर्गच्छनायकाज्ञां विनैवात्मीयप्ररूपणात्मकश्छन्नमेव सर्वज्ञशतकं ग्रन्थः कृतः । परम-नर्थमूलत्वं ज्ञात्वा रहस्येव तत्पुस्तकानि पञ्चषाणि विधाप्य ते तु स्वर्गताः । कालक्रमेण १६७१ वर्षे स ग्रन्थः प्रकटीभूतस्ततोऽस्य केनाप्यशोधितत्वान्निर्नामकत्वाच्चौररूपत्वात् समस्तगीतार्थसाक्षिकं भट्टारकश्रीविजयसेनसूरिभिः सोऽप्रमाणीकृतस्ततः सागरशाखीया ये गच्छनायकाज्ञां विनैव तं बलात्कारेण प्रमाणीकृतवन्तस्तेऽपि भट्टारकश्रीविजयदेवसूरिभिः स्वगणाद्बहिः कृतास्ततस्तैः सागरशाखाधरैर्वेषधरैर्द्रव्यलिङ्गिद्वारा स्थापिताचार्यकैः १६८७ वर्षे यन्मतं कर्षितं तत्सागरीयं मतं त्यक्त्वा सा० मेघाद्या बहवः श्रावकाः श्रीविजयदेवसूरेर्दर्शनादेवबोधिं प्राप्य तस्यैव गुरुत्व-बुद्ध्या वासक्षेपमकारयन्निति ।

तस्मान्मया केवलमर्थसिद्ध्यै जिह्वापवित्रीकरणाय यद्वा।
इति स्तुतः श्रीविजयादिदेवः सूरिस्समं श्रीविजयादिसिंहैः ॥२०२॥
आचन्द्रसूर्यं तपगच्छधुर्यो वृतो परेणापि परिच्छदेन।
जीयाच्चिरं स्तान्मम सौख्यलक्ष्म्यै श्रीवल्लभः पाठक इत्यपाठीत् ॥२०३॥

इतिश्री बृहत्खरतरगच्छीय श्रीजिनराजसूरिसन्तानीय पाठक श्रीज्ञानविमलशिष्य श्रीवल्लभोपाध्यायविरचिते श्रीमत्तपागच्छाधिराजपातिशाह श्रीअकब्बरप्रदत्तजगद्गुरुबिरुदधारक श्री हीरविजयसूरीश्वरपट्टालङ्कार पातिशाहि श्रीअकब्बरसभासंलब्धदुर्वादि जयवाद भट्टारक श्रीविजयसेनसूरीश्वर पट्टपूर्वाचलसहस्रकरानुकारिपातिशाहि श्रीजिहांगीरप्रदत्तमहातपाबिरुदधारि श्रीविजयदेवसूरीश्वरगुणवर्णनप्रबन्धे श्रीमद्विजयदेवमाहात्म्यनाम्नि महाकाव्ये श्रीविजयदेवसूरि सर्वदेशविहारसान्निध्यादिवर्णनो **नामैकोनविंशः** सर्गः। तत्समाप्तौ च समाप्तं श्रीश्रीश्रीविजयदेवमाहात्म्यनामकं काव्यं चतुर्वाच्यमानं चिरं जीयात्।

लिखितोऽयं ग्रन्थः पण्डितश्री५श्रीरङ्गसोमगणि-शिष्यमुनिसोमगणिना। सं० १७०९ वर्षे चैत्रमासे कृष्णपक्षे एकादशी तिथौ बुधौ लिखितं। श्रीराजनगरे तपागच्छाधिराजभ० श्रीविजयदेवसूरीश्वरविजयराज्ये।

# परिशिष्टम्।

## [ तपागच्छीयैकपट्टावलिगतं विजयदेवसूरिविशेषवर्णनम् ]

अथाग्रेतना पट्टावली पुरतोऽनुसन्धीयते—

सिरिविजयसेणसूरी, पट्टे गुणसट्ठिमे अ ।

'सिरिविजयसेणसूरि'त्ति व्याख्या—एकोनषष्टितमे पट्टे श्रीविजयसेनसूरिः, तच्चरित्रं विस्तरतः श्रीविजयप्रशस्तिकाव्यतोऽवसेयं समासतस्त्वेवम्—संवत् १६०४ वर्षे नारदपुर्यां जन्म, सं. १६१३ वर्षे पितृमातृभ्यां सह श्रीविजयदानसूरिहस्ते दीक्षा, ततः श्रीहीरविजयसूरिभिः सर्वशास्त्राणि पाठयित्वा डीसाख्यग्रामे ध्यानं कृत्वा सं. १६२८ वर्षे फाल्गुनशुक्लसप्तम्यां श्रीअहम्मदावादे सूरिपदं प्रदत्तं। तदनन्तरं सर्वप्रकारेण श्रीतपागच्छे ज्ञानदर्शनचारित्रादिसमृद्धिः शिष्याणां श्रावकाणां च वृद्धिश्च जाता। यतस्तस्मिन् वर्षे ऋषिमेघजीमुख्या लुङ्काख्यमतमुख्यास्तत्रत्याधिपत्यं हित्वा सर्पः कञ्चुलिकामिव तत्कुमतवासनां त्यक्त्वा श्रीतपागच्छगुरूणां शिष्यतां प्राप्ताः, तत्स्वरूपं तु प्राग्निरूपितं। ततः श्रीहीरविजयसूरयः १६३९ वर्षे शाहिश्रीअकब्बरेण आकारिता यथा सन्मानिताः, तद्व्यतिकरोऽपि पूर्वं प्रकाशितः। ततः क्रमेण श्रीहीरविजयसूरयः श्रीविजयसेनसूरिभिः सार्द्धं श्रीराजधन्यपुरे चतुर्मासीमासिनास्तस्मिन्नवसरे लाहोरनगरस्थेन श्रीअकब्बरसुरत्राणेन श्रीमदाचार्यगुणगणाकर्णनप्रीतान्तःकरणेन तदाकारणाय स्फुरन्मानं प्रैषि। ततः श्रीगुरूणामाज्ञां शेषामिव शीर्षे निधाय ततश्चलन्तः पत्तनप्रभृतिनगराणि बहून् ग्रामांश्च पवित्रयन्तोऽनेकसङ्घलोकैः पूजिताः परिवृताश्च श्रीअर्बुदाचलतीर्थयात्रां विधाय श्रीसीरोहीनगरे प्राप्तास्तदा तन्नायकेन राज्ञा श्रीसुरत्राणसञ्ज्ञेन बहाडम्बरपूर्वकं सन्मानिताः। ततः क्रमेण श्रीराणपुर-वरकाणकपार्श्वनाथादियात्रां कृत्वा स्वजन्मनगरीं नारदपुरीं च गत्वा क्रमेण मेदिनीपुर-ढीण्डूयाणक-वैराट-महिमनगरादिषु भव्यलोकान् कोकान् सूर्या इव श्रीसूरिधुर्या उद्बोधयन्तो लोधिआणाग्रामे समेयुः। तत्र श्रीशाहिमान्यशेखश्रीअबलफजलभ्रातृजन्मा फयजीनामा श्रीसूरीन्नन्तुमागतः। तत्रानेकलोकविधीयमानबहुमानस्वरूपं स्पष्टाष्टावधानादिसाधकशिष्यश्रेणिस्वरूपं च दृष्ट्वाऽतीवचमत्कृतचेतास्ततस्त्वरितं लाहोरनगरे गत्वा श्रीशाहिपुरतस्तमुदन्तं यथादृष्टमभ्यधात्। तच्छ्रुत्वा शाहिरपि घनाघनान्नीलकण्ठ इव श्रीगुरून् द्रष्टुं सोत्कण्ठोऽभूत्। ततः क्रमेण श्रीसूरयोऽपि शाहिप्रदत्तोद्घाद्यवादनानेकानेकतुरङ्गमविचित्रवैजयन्तीतोरणधोरणीरमणीयमहामहपुरस्सरं लाभपुरं पुरं प्रविश्य तद्दिन एव श्रीशेखजीदरबारीरामदासप्रमुखप्रधानपुरुषद्वारा काश्मीरीमहलनाम्नि धाम्नि श्रीशाहेर्मिलिताः। शाहिरपि गुरून् वीक्ष्य परमप्रमोदमेदुरः सन् श्रीहीरविजयसूरीणामुदन्तं वर्त्मनि कुशलोदन्तं च पृष्टवान्।

श्रीगुरुभिरपि श्रीहीरसूरिभिर्भवतां धर्माशीर्वादो दत्तोऽस्तीत्याद्युक्तं । भृशं तुष्टः सन्नष्टावधानानि द्रष्टुकामोऽस्मीति गुरूनाचष्ट । ततो गुर्वाज्ञया गुरुशिष्यश्रीनन्दिविजयाभिधाविबुधसाधिताष्टावधानानि दृष्ट्वा वचनागोचरं चमत्कारं प्राप्तः। प्रसन्नः सन् महाऽऽडम्बरपूर्वकं स्वस्थानं प्रापयतामिति स्वजनानादिश्य स्वं धामागमत् । अथेष्टवैद्योपदिष्टमितिमन्यमानै राजमान्यैर्वदान्यैस्तत्रत्यास्तिकजनैरष्टदिनानि यावत् केवलं रूप्यकैरेव प्रभावनाद्याडम्बरस्तथा कृतो यथा जैनं राज्यमेकच्छत्रमिव जातमिति । गुरूणां गौरवमसहमानेन केनचिद् भट्टेन—अमी जैना जगदीश्वरं १ भास्करं २ गङ्गां ३ च न मन्यन्ते तेन हे श्रीशाहे ! भवादृशां भूभुजां नैतेषां दर्शनं योग्यमिति श्रुत्वा गुप्तकोपो भूपोऽन्यदा सभायातान् श्रीअनूचानपुङ्गवान् तद्द्विजोक्तमुक्तवान् । ततस्तत्खलाविलसितं मत्वा तत्कालोत्पन्नस्वसमयपरसमयस्मृतिसूक्तिशुक्तिसमुद्रैः श्रीसूरीन्द्रैस्तदीयशास्त्रसम्मत्यैव स्वाभीष्टजगदीश्वरस्वरूपं निरूपितं ।

यथा—यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो,<br>
बौद्धा बुद्ध इति प्रमाणपटवः कर्मेति मीमांसकाः ।<br>
अर्हन्नित्यथ जैनशासनरताः कर्त्तेति नैयायिकाः<br>
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ।। १ ।।

अनेन तद्ग्रन्थोक्तकाव्येन तदीयशास्त्रशस्त्रेणैव तन्मदच्छेदश्चक्रे । इति प्रथमं जगदीश्वरांगीकारप्रश्नोत्तरम् ।

अधामधामधामेदं, वयमेव स्वचेतसि । यस्यास्तव्यसने प्राप्ते, त्यजामो भोजनोदके ।।१।।
इत्यादियुक्तिभिर्द्वितीयं सूर्याङ्गीकारोत्तरम् । तथा गङ्गोदकमन्तराऽस्माकं देवप्रतिष्ठैव न स्यात्, इति तृतीयं गङ्गाङ्गीकारोत्तरम् । इति गुरूक्तवाक्यैः प्रहृष्टः शाहिः श्रीगुरूणां सन्मानं दत्वा खलांस्तिरस्कृतवान् । ततस्तत्र द्रङ्गे श्रीशाहेराग्रहेण चतुर्मासकद्वयं विधाय एकदा पुण्योपदेशक्षणे प्रमुदितेन शाहिना किञ्चिद् याचध्वमित्युक्ते श्रीसूरिः स्माह—हे श्रीशाहे ! गो १ वृषभ २ महिष ३ महिषी ४ हननं, मृतद्रव्यादानं ५ बन्दिग्रहणं ६ चेति षड् जल्पास्तव जगज्जनदुःखभञ्जकस्य नार्हन्तीति, एतेषां जल्पानां हानमेवास्माकं मुदां श्रीशाहीनां च सम्पदां निदानमित्युक्तेस्तुष्टेन श्रीशाहिना तत् षड्जल्पस्फुरन्मानं श्रीसूरिनाम्नैव सर्वत्र प्रहितम् । अस्मिन्नवसरे श्रीहीरसूरिभिर्बाधावशादन्तिमामिलनाय लेखप्रेषणपूर्वमाकारिताः सन्तस्तत्र विचित्रवादिलब्धजयवादाः श्रीसूरिपादाः शीघ्रमेव गुर्वाकारणं कारणमत्रगत्य चतुर्मासकमध्येऽपि चलन्तोऽविच्छिन्नप्रयाणैर्मेरुमण्डलमण्डनीभवन्तः क्रमेण श्रीपत्तनं प्राप्तवन्तः । तत्र श्रीहीरसूरीणां स्वर्गगमनमूनाख्यद्रङ्गे सञ्जातं श्रुत्वा तत्संसारस्वभावमनुभाव्य त्यक्तशोकाः सुखप्राज्यं तपागच्छसाम्राज्यं पालयामासुः ।

अथ तेषां सुकृतकृत्यानि लिख्यन्ते । यथा—तैश्चम्पानेरदुर्गे १६३२वर्षे प्रतिष्ठा कृता । ततः सूरति-

बन्दिरे श्रीमिश्र-चिन्तामणिप्रमुखेषु भट्टेषु सभ्येषु सत्सु अनेकपण्डितपर्षदि श्रीसूरिभिः समं विवादं कुर्वन् श्रीभूषणनामा दिगम्बराचार्यो यथातथाऽपसिद्धान्तं जल्पन् जैनशास्त्रशैवशास्त्रपारगैर्गुरुभिर्निर्जितस्ततः काकनाशं ननाश। अथ निश्शेषलोकाक्रियमाणजयारवपूर्वकं श्रीसूरयः स्वं पदं प्रापुः। ततः क्रमाद् राजनगरे श्रीषांनषांनाख्यक्ष्मापपर्षदि जयश्रियं शिश्रियुः। अथ तत्रैव श्रीविद्याविजयनामकं स्वपदयोग्यं शिष्यं दीक्षयित्वा, श्रा० अहिवदेकारितां प्रतिष्ठां, पुनर्गन्धारबन्दिरे सा० इन्द्रजीकारितां श्रीवीरप्रतिष्ठां, पुनः स्तम्भतीर्थे श्रा० धनाईकारितां प्रतिष्ठां च कृत्वा तत्र चतुर्मासीं चक्रुः। ततः पारणे मेवातदेशादागतान् श्रीहीरसूरीन् सीरोहीनगरे नत्वा स्तम्भतीर्थे पुनरागत्य प० वजिआराजिआख्यकारितश्रीचिन्तामणिपार्श्वनाथप्रतिष्ठां कृत्वा, क्रमेण १६५४ वर्षेऽहम्मदावादे भूमध्यान्निर्गतां श्रीविजयाचिन्तामणिपार्श्वमूर्त्तिं शकन्दरपुरेऽस्थापयत्। पुनस्तत्रैव वर्षे सा० मोटाख्यकारितां प्रतिष्ठां, पुनः दो० लहुआख्यकारितां प्रतिष्ठां कृत्वा लाटा[प]ल्यां ध्यानं विधाय क्रमात् श्रीगूर्जरतीर्थयात्रां श्रीसौराष्ट्रे शत्रुञ्जयादितीर्थयात्रां च कृत्वा स्तम्भतीर्थे श्रीविजयदेवसूरीणां सूरिपदं दत्वा पुनर्वर्षद्वयान्ते १६५८ वर्षे पत्तने गच्छानुज्ञां नंदिं च कृत्वा श्रीशङ्खेश्वरतीर्थयात्रार्थं समेतान् श्रीआचार्यसंयुतान् श्रीपूज्यान् द्वादशशतशकटसंकटः सप्तशतिकरभतुरगोद्भटानेकसुभटविकटः सङ्घपतिहेमराजसङ्घो मरुस्थलीतः शत्रुञ्जययात्रार्थं व्रजन् महोत्सवेन प्राणमत्। ततः श्रीगुरवो राजनगरे चतुर्मासीं चक्रुस्तदा तत्रत्यैः श्राद्धैः श्रीगुरुवाक्प्रबुद्धैः पञ्चसप्तत्याद्यङ्गुलार्हत्प्रतिमाणां महाडम्बरविशिष्टाः षट् प्रतिष्ठाः कारिताः। पुनस्तत्रत्येन सं० सूराख्येन प्रतिश्राद्धगृहं महिमुन्दिकां प्रयच्छता श्रीअर्बुदाद्रिश्रीराणपुरादिसकलतीर्थयात्रामासूत्र्य क्षेमेणागत्य श्रीसूरीन् प्रणत्य महती प्रभावना कृता। किंबहुना तत्राब्दे श्राद्धैर्महिमुन्दिकालक्षमेकं व्ययीकृतं। ततो राजधन्यपुरे प्रतिष्ठाद्वयं, पुनः स्तम्भतीर्थे प्रतिष्ठाद्वयं, प्रतिष्ठामेकामकब्बरपुरे च गन्धारबन्दिरे च प्रतिष्ठाद्वयं कृत्वा क्रमेण सौराष्ट्रराष्ट्रसङ्घाग्रहेण श्रीशत्रुञ्जययात्रां विधाय तत्र देशे चतुर्मासकत्रयं प्रतिष्ठाऽष्टकं च कृत्वा रैवताद्रियात्रापूर्वं नवीननगरे ज्येष्ठस्थितिं स्थित्वा श्रीजामनामकं नृपं धर्मोपदेशतस्तुष्टं कृत्वा ततश्चलन्तः श्रीशङ्खेश्वरपार्श्वं प्रणम्य राजनगरे चतुर्मासीं महाडम्बरविशिष्टां प्रतिष्ठाचतुष्टयीं च चक्रुः। इत्याद्यनेकसुकृत्यैर्जिनशासनं प्रभावयन्तोऽनेकसहस्रजिनप्रतिमाः पञ्चाशत्प्रतिष्ठासु प्रतिष्ठापयन्तो विमलाचलतारङ्गनारङ्गपुरशङ्खेश्वरपञ्चासरराणपुरारासणाविद्यानगरादिषु जीर्णोद्धारान् पुण्योपदेशद्वारा कारापयन्तो हस्तासिद्ध्या च श्रीगौतमावतारा इव, बुद्ध्या चाभयकुमारा इव, विद्यया चाभिनववज्रकुमारा इव, कृतज्ञतया श्रीरामचन्द्रा इव, धैर्येण गिरीन्द्रा इव, आज्ञया च सुरेन्द्रा इव, एकस्यार्थस्य शतार्थत्वेन श्रीसोमप्रभसूरय इव श्रीविजयसेनसूरयोऽष्टौ वाचकपदानि सार्द्धशतपण्डितपदानि च दत्वा द्विसहस्रीमितसंयतिसमुदायस्याशां पूरयित्वा सवाईहीरविजयसूरिरिति बिरुदधारका भट्टारकत्वं विंशतिवर्षाणि प्रपाल्याकब्बरपुरे १६७१ वर्षे ज्येष्ठकृष्णैकादश्यां स्वर्गं जग्मुः।

सट्ठिअमे सिरिविजयदेवसूरी संवइ तवगणतरणितुल्लो ॥ १ ॥

षष्टितमे पट्टे श्रीविजयदेवसूरिः। तद्वृत्तमपि यथादृष्टं कियल्लिख्यते यथा—श्रीराजदेशमण्डने ईडरदुर्गे संवत् १६३४ वर्षे जन्म। ततो नवमे वर्षे—१६४३ वर्षे जनन्या सह दीक्षा। ततः १६५५ वर्षे पण्डितपदं। ततोऽनुक्रमेण १६५६ वर्षे स्तम्भतीर्थे सूरिपदं। तद्व्यतिकरो यथा—सर्वव्यवहारिश्रेणिशिरोमणि सा० श्रीमल्लनामा स्वभ्रातृजन्मना सा० सोमाख्येन सह श्रीआचार्यपदस्थापनार्थमर्थव्ययं कर्त्तुकामः प्रकामप्रमोदेन मरुमेदपाटलाटसौराष्ट्रकच्छकुङ्कणादिदेशेषु गूर्जरदेशे च प्रतिग्रामं प्रतिनगरं कुङ्कुमपत्रिकाप्रेषणपूर्वं सङ्घलोकान् सहस्रशः समाहूय तपागणयतियतिनीसप्तशतीमितपरिकरमाकारितवान्। अथ सकलसङ्घमिलनानन्तरं श्रीमल्लसाधुना बन्धुरताऽधरीकृतसुरमन्दिरे निजमन्दिरे दिव्यदुकूलकमनीयमण्डपं शक्रमण्डपमिव निर्माय विज्ञप्ताः श्रीविजसेनसूरयो वैशाखशुद्धचतुर्थ्यां चतुर्थे रवियोगे कुमारयोगे मृगाङ्कमृगाशिरःसंयोगाद् अमृतसिद्धियोगेऽपि च श्रीविजयदेवसूरिरिति नामस्थापनपूर्वकं सूरिपदं ददुः। अथ श्रीमल्लसाधुना सन्तुष्टेन सङ्घभक्तिस्तथाचक्रे यथा कल्पवृक्ष एवायामिति मेने। किं बहुना तस्मिन्महे सा०श्रीमल्लेन दशसहस्ररूप्यकव्ययः कृतः। ततस्तदग्रेतनदिने तत्रत्येन ठक्करकीकाख्येन तत्पदोत्सवनिमित्तमेवाष्टसहस्ररूप्यकव्ययपूर्वं प्रतिष्ठा कारिता। एवं सर्वसङ्ख्यया श्रीविजयदेवसूरीणां पदमहे पञ्चाशत्सहस्रप्रमिता महिमुन्दिका व्ययिताः। ततः १६५८ वर्षे पत्तने परीक्षकसहस्रवीरसञ्ज्ञेन पञ्चसहस्रमहिमुन्दिकाव्ययपूर्वकं गच्छानुज्ञानन्दिमहश्चक्रे। अथ श्रीविजयदेवसूरयोऽहम्मदावादे प्रतिष्ठाद्वयं, पत्तने प्रतिष्ठाचतुष्टयं, स्तम्भतीर्थे प्रतिष्ठात्रयं बहुद्रव्यव्ययपूर्वकं कृत्वा स्वजन्मभूमौ श्रीइलादुर्गे चतुर्मासीं चक्रुः। तदा तत्रत्यैः सङ्घलोकैरनेके महोत्सवाः कृताः। तन्माहात्म्यहृष्टो राजा श्रीकल्याणमल्लनामा[चिन्ता]मणिपाठिमहाभट्टचट्टवेष्टितः प्रतिश्रयं प्राप्तस्तर्कवादमकारयत्। तदा तेषां सूरीणां पुण्योदयात्पार्श्ववर्तिभिर्वादिदर्पसर्पगारुडरत्नैः पण्डितपद्मसागरगणिगीतार्थशिरोरत्नैरेव सर्वेऽपि भट्टास्तथा निर्जिता यथा लज्जिताः सन्तोऽहो! गुरूणां गुरुतेति स्तुवन्तो राजेन्द्रमुख्याः स्वाश्रयं प्रापुः। तदा तत्र महती प्रभावना जाता। ततो बृहन्नगरे वीरप्रतिष्ठा कृत्वा राजनगरे चतुर्मासीं स्थिताः। तत्रावसरे इलादुर्गे श्रीऋषभदेवबिम्बं यवनैर्व्याङ्गितं ततस्तत्प्रमाणमेव नवीनं बिम्बं श्राद्धैर्विधाप्य नटीपद्रे महत्यां प्रतिष्ठायां श्रीसूरिभिः प्रतिष्ठाप्य गिरिशिरःस्थचैत्यचैत्योद्धारपूर्वकं स्थापितं। ततोऽन्यदा श्रीमण्डपाचले श्रीअकब्बरपातिशाहिपुत्राजिहांगीरश्रसिलेमशाहिः श्रीसूरीन् स्तम्भतीर्थतः सबहुमानमाकार्य गुरूणां मूर्त्तिं रूपस्फूर्त्तिं च वीक्ष्य वचनागोचरं चमत्कारमाप्तवान्। ततः समये श्रीगुरुभिः समं धर्मगोष्ठीक्षणे विचित्रधर्मवार्त्ता पृष्ट्वा साक्षाद् गुरुस्वरूपं निरुपमं दृष्ट्वा च स्वपक्षीयैः परैः प्राक् किञ्चिद् व्युद्ग्राहितोऽपि शाहिस्तदा तत्पुण्यप्रकर्षेण हर्षितः सन् श्रीहीरसूरीणां श्रीविजयसेनसूरीणां च पट्टे एत एव पट्टधराः सर्वाधिपत्यभाजो भवन्तु, नापरः कोऽपि कूपमण्डू-

कमाय इत्यादि भूयः प्रशंसां सृजन् जिहांगीरीमहातपाबिरुदं दत्तवान्, अनुज्ञापितवांश्च तपागच्छ-श्रावकेन्द्रचन्द्रपालादीन् यदस्मदीयदक्षिणीयमहावाद्यवादनपूर्वकं गुरून् स्वाश्रयं प्रेषयन्तु यथा युष्मद्गुरून् वयमपि गवाक्षस्था निरीक्ष्य हृष्टा भवामः। इत्यादिवचनोत्साहितैस्तै राजमान्यसङ्घै-र्दाक्षिणात्यमालवीयसङ्घैश्च तथा महोत्सवाः कृता यथा तपागणसङ्घमुखे पूर्णिमाऽवतीर्णा अन्येषां च गुरुद्विषां मुखेऽमावास्येति। किंबहुना यथा पुराऽकब्बरेण श्रीहीरसूरयस्ततोऽप्याधिक्येन श्रीविजयदेवसूरयः शाहिजिहांगीरेण सन्मानिता इति। अथ श्रीगुरवो गूर्जरदेशान्तर्भूत्वा सौराष्ट्र-देशसुन्दरे द्वीपबन्दिरे फरङ्गीपातशाहिप्रदत्तव्याख्यानानुज्ञापूर्वं चतुर्मासकद्वयीं च कृत्वा क्रमेण हलारदेशे श्रीनवानगरे चानेकलोकान् बोधिदानेन सुखयन्तः श्रीशत्रुञ्जये यात्रां विधाय स्तम्भतीर्थे चतुर्मासकं च निर्माय साबलीस्थाने सोनीरत्नसीक्रियमाणामारिपटहप्रदाने तीव्रक्रियाकष्टानुष्ठा-नपूर्वकं सूरिमन्त्रसत्कं मासत्रयध्यानं विधायाक्षयतृतीयायां सभामभ्येयुः। ततस्तत्रैव चतुर्मासीं प्रतिष्ठाद्वयीं च कृत्वा श्रीइलादुर्गे प्रतिष्ठात्रयं कृतवन्तः। ततः सङ्घेन सार्द्धं श्रीआरासणादितीर्थयात्रां कुर्वाणाः पोसीनाख्यपुरे पुराणानां पञ्चप्रासादानां श्राद्धानामुपदेशद्वारेण बहुद्रव्यव्ययसाध्यमपि तदुद्धारं कारितवन्तः। क्रमेण चारासणे मूलनायकाः पुनः प्रतिष्ठाविषयीकृत्य स्थापिताः। कालान्तरेण च इलादुर्गे श्रीकल्याणमल्लनरेन्द्राग्रहादागत्य तत्रत्य सा० सहजूगृहे महामहेन १६८१ वर्षे वैशाखशुद्धषष्ठ्यां श्रीविजयसिंहसूरीन् स्वपदेऽस्थापयत्। तन्महोत्सवात्तुष्टः कल्याणराजोऽपि रणमल्लचोकीनामके गिरिशृङ्गे श्रीगुरून् समाहूय धर्मगोष्ठीं विधाय तत्स्थानं नवीनचैत्यस्थापनाय गुरुपुरः प्राभृतीकृतवान्। अथ च तत्र चैत्यमद्यापि निष्पाद्यमानमस्ति। ततश्चतुर्मासान्ते मरुदेश-सङ्घघनाग्रहात् श्रीगुरवोऽनूचानान्विता अनेकलोकपरिवृताः श्रीअर्बुदाचलतीर्थे नमस्कृत्य सा तेजपालेन विधीयमानां महामहमनोहरां श्रीसीरोहीमागत्य चतुर्मासीं तस्थुः। तत्र च श्रीजा-बालपुरप्रमुखतत्परिसरसङ्घलोकैर्जङ्गमं तीर्थमागतं मन्यमानैर्बहुतरद्रव्यव्ययपूर्वकमागत्य वन्दिताः। तत्रावसरे सादडीसत्कलुम्पाकैश्चैत्यार्चाद्यसद्भावविषयिणी महती जिनशासनाशातना कृता। ततस्त-त्रत्यैर्निर्बलैः श्रावकैः सीरोह्यामागत्य श्रीगुरवो विज्ञप्ताः-यद् युष्मादृशेषु गुरुषु सत्सु वयं वराकैर्लु-म्पाकैः पराभूताः स्मस्तेनास्मत्साहाय्यं विधीयताम्। इत्युक्तेः शीघ्रमेव गुरुप्रेषितैर्गीतार्थैरेव तत्र गत्वा तद्द्वेषधारिणो भास्करैर्घूका इव मूकतां प्रापिताः। ततोऽप्युदयपुरे मेदपाटदेशाधीशराणाश्रीक-र्णसिंहपार्श्वे गत्वा छन्दःकाव्यादिभिस्तं तोषयित्वा सकलराजलोकपरिकलितायां पर्षदि लुम्पा-कान् वादे विजित्य तपाः सत्या लुङ्काश्चासत्या इति श्रीराणाजीसत्कं सहीत्यक्षरद्वयीकुन्ताङ्कितं स्फुरन्मानमानीय सादडीचतुष्पट्टे वाचायित्वा गुरूणां प्रसत्तेस्तपागच्छप्रौढिः प्रौढतमा निर्म्मिता। ततो योधपुराधीश्वरराजश्रीगजसिंहजीमान्यपरमप्रधानमन्त्रिजयमल्लेन श्रीजालोरदुर्गे श्रीगुरूना-कार्य बहुतराडम्बरेण प्रतिष्ठात्रयमन्तरान्तरा चतुर्मासकत्रयकारापणपूर्वकं स्वर्णगिरिशीर्षे चैत्यत्रयं च प्रतिष्ठापितम्।

१६८४ वर्षे पुनर्जयमल्लमन्त्रिणा सहस्रशो रूप्यकव्ययेन विजयसिंहसूरीणां गच्छानुज्ञानन्दि कारिता। ततो मेडतानगरे प्रतिष्ठात्रयं विधाय विन्ध्यपुरे चतुर्मासीस्थितान् गुरून् ज्ञात्वा गच्छीयगीतार्थरञ्जितेन राणाश्रीजगत्सिंहजीकेन श्रीवरकाणके पौषदशम्यां समागतानां लोकानां शुल्कमोचनं तदाघाटरोपपूर्वं ताम्रपत्रेणोत्कीर्य श्रीगुरूणां पुरः प्राभृतीकृतं तत्कदाप्यभूतपूर्वं सर्वेषामद्भुतकृत् सञ्जातम्। ततो राणपुरादिषु तीर्थयात्रां कृत्वा झालाश्रीकल्याणजीकेन संमुखमागत्याकारिताः श्रीमेदपाटदेशं पवित्रयन्तः प्रथमं षमणोरग्रामे प्रतिष्ठाद्वयं, ततो देवकुलपाटके प्रतिष्ठामेकां, ततो नाहीग्रामे अघोटानगरे चेति प्रतिष्ठापञ्चककरणपूर्वकं श्रीउदयपुरे चतुर्मासीं चक्रुः। ततस्तत्पारणके गूर्जरत्रां प्रतिचिचिलिषून् दलवादलमहलमध्यस्थितान् श्रीगुरून् श्रीजगत्सिंहजीसञ्ज्ञको राणकोऽपि नन्तुमागतश्चिरं गुरुमुखचन्द्रे चकोरीकृतचक्षुस्तद्देशनाऽसमसुधां पीत्वा प्रीतः प्रकामं सत्कारसन्मानादि दत्त्वा गुरुपुरश्चतुरो जल्पान् प्रपन्नवान्। तथाहि–अद्यप्रभृति पिंछोलके उदयसागरे च तटाके मीनजालानि निषिध्यति १, राज्याभिषेकदिने गुरुवारे जीवामारिः कार्या २, स्वजन्ममासे भाद्रपदाभिधे जीवहिंसा न कार्या ३, मचिंददुर्गे कुम्भलविहारे जीर्णोद्धारः कार्यः ४–इति जल्पचतुष्टयीग्रहणाभिग्रहवन्तं भूमिकान्तं वीक्ष्य सकला अपि लोका भृशमाश्चर्यभाजोऽहो! गुरूणां कोऽपि लोकोत्तरो महिमातिशय इत्यादिवर्णनपरा जाताः। किंबहुना श्रीकुमारपालभूपालेन श्रीहेमसूरय इव श्रीराणाजीकेन श्रीगुरवो बहु मेनिरे–इत्यादयः कियन्तोऽवदाता लिख्यन्ते। यतस्तपसा साक्षाद्धन्यानगारा इव, सौभाग्येनाभिनववसुदेवावतारा इव, ध्यानमौनक्रियाकष्ठानुष्ठानादिना श्रीभद्रबाहुस्वामिन इव, निर्विकृतिविकृतित्यागेन प्रायो भक्तजनगृहाहारत्यागेन च श्रीमानदेवसूरय इव श्रीविजयदेवसूरयः सूर्या इव भरतभूमिपद्मिनीं प्रतिबोधयन्तो मालवमण्डले उज्जयिन्यादौ दक्षिणदेशे च बीजापुर-बर्हानपुरादौ कच्छदेशे च भुजनगरादौ मरुदेशे च जावालपुर–मेदिनीपुर–घंघाणीग्रामादौ जीर्णोद्धारकारापणपूर्वकमनेकशतार्हत्प्रतिमाः प्रतिष्ठयन्तोऽनेकपण्डितपदानि पाठकपदानि स्थापयन्तो दर्शनादेव हीन्दूतुरुष्कादीनामपि चमत्कारं कुर्वन्तो जीवहिंसादिनिषेधनियमांश्च कारयन्तः–

सिरिविजयसीहसूरिप्पमुहेहिं णेगसाहुवग्गेहिं।
परिकलिआ पुहविअले, विहरिंता दिंतु मे भद्दं ॥२॥

श्रीविजयसिंहसूरि–प्रभृत्यनेकशतसाधुभिः परिवृताश्चिरं पृथ्व्यां विहरन्तो 'भद्रं दिशन्तु' कल्याणं कुर्वन्त्विति गाथार्थः ॥२॥ इति गाथा द्वयं पूर्वपट्टावल्यां प्रयोज्यम्।

तपगणपतिगुणपद्धतिरेषा गुणविजयवाचकैर्लिलिखे।

गन्धारबन्दिरीयश्रावकसा० मालजीतुष्ट्यै ॥१॥

इति गुर्वावली प्राचीनगुर्वावल्याः पुरोऽनुसन्धीय सुधीभिर्वाचनीया ॥। श्रीमङ्गलमस्तु ॥

तथा स्तम्भतीर्थवासिना सा० देवचन्द्रेण देवीभूय स्वे द्वे भार्ये सं० १६७१ वर्षोत्पन्नो-पाधिमतमोचनाय भृशं प्रोक्तमपि तन्मतं न त्यजतस्तदान्यदा तदीयश्राद्धजेमनवारायां जायमा-नायां तेन देवेन तत्र पाषाणवृष्टिस्तथा कृता यथा भुक्तिं त्यक्त्वा सर्वेषु नष्टेषु तं देवं प्रकटीभूतं ते प्रोचतुस्त्वं कोऽसि कथं चावां भापयसि ? इति प्रोक्ते सोऽवोचत्—अहं भवद्भर्त्ता देवचन्द्रो देवीभूतोऽन्यैः सप्तभिर्देवैः सह श्रीविजयदेवसूरीणां सांनिध्यं कुर्वाणोऽस्मीति तेन भवतीभ्या-मपि स एव गुरुरङ्गीकार्यो येन मद्भयं न भवतीति प्रोक्ते ते अपि श्रीगुरुभक्ते जाते इत्येकं देवसांनिध्यम् १ । तथाऽनयैव रीत्या घोघाख्यबन्दिरवासी सा० सोमजीनामा स्वं कुटुम्बं प्राक्पराङ्मुखमपि देवीभूय प्रतिबोध्य च श्रीविजयदेवसूरिभक्तं कृतवानिति द्वितीयम् २ । तथा श्रीविजयदेवसूरिषु मण्डपाचलं प्रतिचलत्सु सेहरषीनामग्रामस्वामिपुत्रः कमाख्यः परमारः । स च पूर्वं भूतार्त्तत्वेन लोकान् मारयन् पित्रा निगडितस्तदा गुरुवासक्षेपेणैव सज्जीभूत इति महदाश्च-यकृज्जातमिति तृतीयम् ३ । तथा राजनगरवासी वणिक्पुत्रः सप्त वर्षाणि यावद्ग्रथिलोऽ-भूत् तत्पित्रादिभिः श्रीविजयदेवसूरिकरक्षेपः कारितस्तत्कालमेव सज्जो जातश्चेति महदद्भुत-मिति चतुर्थम् ४। तथा मेडतावासी षीमसरागोत्रियः सा थानाख्यो नवमासान् यावत्क्षेत्रपाल-गृहीतोऽन्यदा श्रीविजयदेवसूरिवासक्षेपेण सज्जोऽजनि, इति सर्वलोकप्रसिद्धमिति पञ्चमम् ५ । तथा मरुदेशे गूर्जरदेशे दुर्भिक्षे महति सत्यपि श्रीगुरुषु समागतेषु महत् सुभिक्षं जातमित्यादि श्रीविजयदेवसूरीणां देवसांनिध्यं बहुशो दृष्टमिति ॥

# अनुक्रमणिका